A PROJECT ON ĀGAMA, ĀLAYA AND ĀRĀDHANA



Kalpatharu Research Academy Publication
Chief Editor: Daivajna K.N. Somayaji

# ĀGAMA - KOSHA

## (SOURCE-BOOK)

VOL. XII

BY

S.K. RAMACHANDRA RAO

KALPATHARU RESEARCH ACADEMY
Post Box No. 1857, Bangalore 560 018
Phone: 624847

Āgama-Kosha Vol. XII, Source-Book, by Vidyālankara, Sāstra-chūdāmani, Vedāntha-nidhi, Sangita-Kalāratna Prof. S.K. Ramachandra Rao and Published by Daivajna K.N. Somayaji, Chief Editor and Director of Kalpatharu Research Academy, Post Box No. 1857, Bangalore 560 018, Phone: 624847.

Published with the generous financial assistance from the Ministry of Human Resources Development, Government of India, New Delhi.



Price: Rs. Twenty Five only (subsidized)

The Publications of Kalpatharu Research Academy are meant to reach all sections of society, and hence are sold at highly subsidized prices. An appeal is hereby made to book-sellers to adhere to the prices indicated in each volume by the publishers, and not enhance them on any account.

**UBS PUBLISHERS DISTRIBUTORS LTD.,**
10, First Main Road, Gandhi Nagar,
P.B. No. 9713, Bangalore 560 009.
Phones: 2263901, 2263902, 2263903, 2263904.

Branches: New Delhi - Bombay - Bangalore - Madras - Calcutta-Patna-Kanpur-London.

Printed by:
**P. S. VENKATESH BABU at Omkar Offset Printers**
Ist Main. N.T. Pet, Bangalore-560 002., Ph: 609026, 608186

# PREFACE

Kalpatharu Research Academy, Bangalore, launched in 1988, the project on Āgama, Ālaya and Āradhana to be completed in twelve volumes. Entitled Āgama-Kosha (Encyclopaedia of Āgama), the first volume was published in 1989, and the subsequent volumes were brought out in regular and predetermined intervals. The final volume is now being presented to the scholarly world, and the project has been completed.

Among the major publication-projects undertaken by the Academy, the project on Pratima-Kosha (Encyclopaedia of Indian Iconography) was completed in six volumes (1988-1992), and the project on Āgamas (Āgama-Kosha) in twelve volumes (1989-1994).

These two projects together have contributed considerably to the understanding of the temple-culture in India, which is an important aspect of our culture. An attempt has been made to make all the volumes authentic and comprehensive.

The Academy is grateful to Vidyalankara, Sastra-Chudamani, Vedantha-Nidhi, Sangita-Kalaratna Prof. S. K. Ramachandra Rao, who has spared no pains to prepare all these volumes.

The publication of all these volumes was made possible by the generous financial assistance provided by the Ministry of Human Resources Development, Government of India, New Delhi.

The Academy feels grateful to the Officers of the Ministry.

Also to be placed on record is the co-operation extended by the printers, M/s Omkar Offset Printers, who have undertaken to produce this volumes in record time and in excellent manner.

Bangalore
**11-4-1994**
Chandra-Ugadhi

**Daivajna K. N. Somayaji**
Chief Editor and Director
**KALPATHARU RESEARCH ACADEMY**

# INTRODUCTION

This volume completes the series of publications in the project of Agama-Kosha, (Agama Encyclopaedia). The Twelve volumes have been designed to provide a comprehensive knowledge of, and an adequate insight into, Agama literature and practice. This aspect of the temple-cult had received little attention from scholars and students of indology. The volumes were therefore indicated.

The twelfth volume, which is being brought out now is in the nature of a source-book. While each of the volumes contains relevant source materials of the subject-matter of that volume in the appendices, this volume contains the source-materials which are general in character and which are representative of all the Agama divisions.

It is to be hoped that the volumes of the series will be useful to understand and appreciate the meaning and significance of Indian temples as well as the worship-rituals conducted in them.

I am indebted to Daivajna K.N. Somayaji, Director of the Kalpatharu Research Academy for providing all facility for me to prepare the twelve volumes. The materials have been garnered from different sources, both published books and unpublished manuscripts. Saiva, Sakta and Vaishnava divisions of the Agama are covered in the series with equal attention given to them.

This series will be found to supplement the information provided in the six volumes of Pratima-Kosha (Encyclopaedia of Indian Iconography).

The printers of the present volume, Omkar Offset Printers, merit a word of praise for the meticulous manner in which the book has been produced.

**S.K. Ramachandra Rao**

# I

The following excerpts relating to the scriptural foundations of the Āgama tradition are taken from ŚAIVĀGAMAPRATIBHĀṢĀMAÑJARĪ, compiled by Veda-jñāna-guru of Chidambaram, (around 1560 A.D.). The entire text has been edited with translation in French by Bruno Dagens (Institute Francais d'lndologic, Pondichery 1979).

## 1. The Vedic corpus

ऋग्यजुस्सामाथर्वाणो वेदाश्चत्वार ईरिताः ॥
मीमांसा न्यायशास्त्रं च पुराणं स्मृतिरित्यपि ।
चत्वार्येतान्युपाङ्गानि बहिरङ्गानि तानि वै ॥

आयुर्वेदोऽर्थवेदश्च धनुर्वेदस्तथैव च ।
गन्धर्ववेदश्चेत्येवमुपवेदाश्चतुर्विधाः ॥

मीमांसा सर्ववेदार्थप्रविचारपरायणा ।
न्यायशास्त्रं प्रमाणादिसर्वलक्षणतत्परम् ॥

पुराणमिष्टशाखार्थैर्वेदार्थस्योपबृंहणम् ।
कथारूपेण महता पुरुषार्थप्रवर्तकम् ॥

धर्माश्रमानुरूपेण धर्माधर्मविभागतः ।
धर्मशास्त्रमनुष्ठेयं धर्माणां तु नियामकम् ॥

हेतुलिङ्गौषधस्कन्धैरायुरारोग्यदर्शकः ।
आयुर्वेदो ह्यनुष्ठानं सर्वेषां तेन वर्तनम् ॥

अर्थवेदोऽन्नपानादि प्रधानमुत तत्परः ।
दक्षिणाज्यपुरोडाशचरुसंपादनादिभिः ॥

तत्पालनाच्चतुर्वक्त्रपुरुषार्थप्रदायकः ।
धनुर्वेदो भवेद्यत्र परिपन्थिनिरासकः ॥

सप्तस्वरप्रयोगं हि सामगन्धर्ववेदयोः ।
उपाङ्गान्युपवेदाश्च प्रत्येकं प्रवदन्ति हि ॥

## 2. The Scriptural Divisions

बौद्धं चैवार्हतं चैव पाञ्चरात्रं च शैवकम् ।
समयं चतुर्विधं स्यात्तु तत्तद्भेदमनेकधा ॥

(Achintya-bhedāgama, 40, 5-6)

## 3. The Varieties of traditions

शास्त्रं चतुर्विधं ज्ञेयं वामदक्षिणमिश्रकम् ।
सिद्धान्तेन समायुक्तं चतुर्थैवं प्रकीर्तितम् ॥

वामादिशास्त्रभेदेषु यो दीक्षां वर्तते क्रमात् ।
वामी च दक्षिणी मिश्री सिद्धान्ती चेति कीर्तितः ॥

वामं हि शाम्भवं शास्त्रं दक्षिणं भैरवात्मकम् ।
मिश्रं यामलमित्युक्तं सप्तमातृप्रधानकम् ॥

सिद्धान्तं सर्वसारं हि शुद्धशैवमिति स्मृतम् ।
वामं च दक्षिणं चैव मिश्रकं च त्रयो ह्यमी ॥

शैवबाह्याः समाख्यातास्ते तु शैवेऽप्यपूजिताः ।

(Suprabhedāgama, 1, 6-11)

शैवं चतुर्विधं प्रोक्तं सिद्धान्तं द्विविधं भवेत् ॥

कर्मान्तमेवं ज्ञानान्तं शैवमूर्ध्वं परं स्मृतम् ।
चर्यायोगक्रिया चैव कर्मणां साधनं भवेत् ॥

चर्याक्रियायोगयुक्तं ज्ञानिनश्च भवेत्तदा ।
शैवं परात्परं ज्ञेयं सर्वतत्त्वैकनायकम् ॥

सर्वतन्त्रमयं ज्ञेयं सर्वमन्त्रमयं भवेत् ।
जन्मान्तरतपोभिश्च सन्मार्गज्ञानसंभवम् ॥

(Achintya-bhedāgama, 40, 20-22)

## 4. The Four-fold Śaivas

देशिको मन्त्रवृत्तिश्च पुत्रकः समयी च सः ।
चत्वार एते शैवाः स्युर्यतिनो व्रतिनोऽपि वा ॥

सर्वेषामेव वर्णानां शिवाश्रमनिषेविणाम् ।
शिवधर्मः शिवेनोक्तो धर्मकामार्थमुक्तये ॥

ब्राह्मणः क्षत्रियो वैश्यः स्त्री शूद्रो वा शिवाश्रमी ।

(Mṛgendrāgama, charyā, 1, 2)

गृहस्थो भिक्षुकश्चैव ब्रह्मचारी तथैव च ॥

वानप्रस्थश्च इत्येते आश्रमाश्च उदाहृताः ।
चत्वारो गोचराः शम्भोः साक्षान्मूर्तिसमुद्भवाः ॥

शिवगोत्रं शिखागोत्रं ज्योतिर्गोत्रं तृतीयकम् ।
सावित्रीगोत्रमित्येतच्छैवगोत्रचतुष्टयम् ॥

लोकानुग्रहकर्तारः शैवा ज्ञेया न चापरे ।
शुद्धादिकारणोद्भूतास्ते च ज्ञानक्रियान्विताः ॥

दधीचस्थापितं स्थानं गोविदारमिति श्रुतम् ।
स्थानमामर्दकं नाम श्रीदुर्वासो निषेवितम् ॥

तस्माद्विनिर्गतं स्थानं रणभद्रं च गोलकी ।
तथा पुष्पगिरिश्चेति स्थानमेवं चतुर्विधम् ॥

एतत्स्थानसमुद्भूताः शैवास्ते च चतुर्विधाः ।
ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ॥

एतेषामपि संन्यासी योगिमुख्यो विधीयते ।

संन्यासाश्रममत्यन्तमुत्तमं दीक्षितं भवेत् ॥

तस्मात्तद्व्रतमुक्तिस्तु नास्ति कैवल्यकारणम् ।
दीक्षाख्यज्ञानसंस्पर्शाल्लोके मुक्तिसुखं द्विज ॥

(Achintya-bhedāgama, 40, 15 ff)

---

## II

The extracts from the Śaiva text described as an upāgama and called SĀRDHATRIŚATIKĀLOTTARĀ-GAMA, given below relate to the fundamental categories of significante for a Śaiva devotee.

अल्पग्रन्थ महार्थं च पदार्थानीकसंकुलम् ।
वक्तुमर्हसि देवैषां प्रमादार्थ मम प्रभो ॥ (1, 3)

(अनीकः समूहः षट्संख्यात्वम्)

The Vṛtti of Bhaṭṭa-Rāma-kaṇṭha on the above quotes the following authority:

पतिर्विद्या तथाविद्या पशुः पाशश्च कारणम् ।
तन्निवृत्ताविति प्रोक्ताः पदार्थाः षट् समासतः ॥"

(Paushkarāgama, Vidyāpāda, 1, 8)

The following verses are excerpts from the text (Paṭala 1, 4-14)

अथातः संप्रवक्ष्यामि शास्त्रं परमदुर्लभम् ।
नाम्ना तु वातुलात्तन्त्राद्दध्नो घृतमिवोद्धृतम् ॥

नादाख्यं यत्परं बीजं सर्वभूतेष्ववस्थितम् ।
आकाशवायुप्रभवः शरीरात्समुच्चरन्वक्त्रमुपैति नादः ।
स्थानान्तरेषु प्रविभज्यमानो वर्णत्वमागच्छति यः स शब्दः ॥
मुक्तिदं परमं किं च दिव्यसिद्धिप्रदायकम् ॥

कलातत्त्वोर्ध्वभुवने कैवल्यं संभवेत्पशोः
विज्ञानयोगसंन्यासैर्भोगाद्वा कर्मणः क्षयात् ॥

तद्विदित्वा महासेन देशिकः पाशहा भवेत् ।
आगोपालाङ्गना बाला म्लेच्छाः प्राकृतभाषिणः ॥

अन्तर्जलगताः सत्त्वास्तेऽपि नित्यं ब्रुवन्ति तम् ।
स्थूलं सूक्ष्मं परं ज्ञात्वा कर्म कुर्याद्यथेप्सितम् ॥

स्थूलं शब्द इति प्रोक्तं सूक्ष्मं चिन्तामयं भवेत् ।
चिन्तया रहितं यत्तु तत्परं परिकीर्तितम् ॥

सान्तं सर्वगतं शून्यं मात्राद्वादशके स्थितम् ।
ब्रह्माणि ह्रस्वाः प्रोक्तानि दीर्घा ह्यङ्गानि षण्मुख ॥

अनुस्वारो भवेन्नेत्रं सर्वेषां चोपरि स्थितः ।
सविसर्गं भवेदस्त्रमनुस्वारविवर्जितम् ॥

पष्ठं त्रयोदशान्तं च पञ्चमे विनियोजयेत् ।
शिवं तत्तु विजानीयान्मन्त्रमूर्तिं सदाशिवम् ॥

षष्ठमस्य द्वितीयं तु चतुर्थाद्येन संयुतम् ।
द्वितीयात्पञ्चमाच्चैव आदिमं योजयेत्पुनः ॥

हन्ति विघ्नाञ्शिवास्त्रेण शिखया मुक्तिदं स्मृतम् ।
एतत्पाशुपतं दिव्यं सर्वपाशनिकृन्तनम् ॥

ब्रह्माणि च शिवं साङ्गं नेत्रं पाशुपतं च यत् ।
समासात्कथितः सर्वो मन्त्रोद्धारस्त्वयं शुभः ॥

---

# III

The following excerpts from MṚGENDRĀGAMA, charyā-pāda, patala 1, 34-46) relate to the main Āgama divisions called Srotas and Anusrotas, and enumerate the Śaivāgama-texts, twenty-eight in number.

## 1. The Main Streams

स्रोतो ब्रूयादनुस्रोतो भेदान् संख्यानमेव च ।
प्रवृत्तये गुरुं स्वं च स्तेयी स्यात्तदकीर्तनात् ॥

स्रोतांसि कामिकाद्यूर्ध्वमसिताङ्गादि दक्षिणम् ।
संमोहाद्युत्तरं प्राच्यं त्रोतलादि सुविस्तरम् ॥

आप्यं चण्डासिधारादि चण्डनाथपरिग्रहम् ।

## 2. The Secondary Streams

शैवं मान्त्रेश्वरं गाणं दिव्यमार्षं च गौह्यकम् ॥

योगिनीसिद्धकौलं च स्रोतांस्यष्टौ विदुर्बुधाः ।
प्रतिस्रोतोऽनुयायीनि तानि ब्रूयाद्विभागशः ॥

## 3. The Śaiva Division

शैवं प्राक्तन्त्रनिर्माणमाज्ञासिद्धमसंशयम् ।
तदीशानैर्गणैर्देवैर्मुनिभिश्च तदिच्छया ॥
विज्ञाय संभृतं स्वोक्त्या तादाख्यं समुपागतम् ।

## 4. The Guhyaka Division

गुह्यका भुजगा यक्षा दानवाश्च शिवेरिताः ॥
यदूचुरुपसंहृत्य तत्स्रोतो गौह्यकं स्मृतम् ।

## 5. The Yoginī-Kaulas

योगिन्यो लेभिरे ज्ञानं सद्यो योगावभासकम् ॥
येन तद्योगिनीकौलं नोत्तीर्णं ताभ्य एव तत् ।

## 6. The Siddha-Kaulas

तथान्यदपि संहारो यो मिश्रो मिश्र एव सः ॥
वादिभेदप्रभिन्नत्वात्तेषां संख्या न विद्यते ।
शैवा रौद्रा महाभेदा दशाष्टादश चोर्ध्वके ॥
रौद्रा रुद्रैः शिवाविष्टैरुद्गीर्णा न स्वबुद्धितः ।

## 7. The Śaivāgama texts

शैवानां कामिकं पूर्वं योगोद्भवमचिन्त्यकम् ॥
कारणं ज्ञानमजितं दीप्ताख्यं सूक्ष्मकं परम् ।
साहस्रमंशुमत्संज्ञं सुप्रभिद्दशमं विदुः ॥
रौद्राणां विजयं पूर्वं निःश्वासं पारमेश्वरम् ।
स्वायंभुवं तथाग्नेयं वीरभद्रं च रौरवम् ॥
मकुटं विमलाख्यं च चन्द्रज्ञानाख्यमेव च ।
मुखबिम्बकमुद्गीतं ललितं सिद्धसंज्ञकम् ॥
सन्तानं चैव शार्वोक्तं किरणं वातुलं परम् ।

---

## IV

The following excerpts relate to the origin of the Vaishṇava Āgama tradition, the ideology justifying the Āgama and the spiritual practices prescribed in this Āgama tradition. The passages are extracted from the text known as ŚRĪ-PRAŚNA-SAMHITĀ of the Pancharātra school (chapter 1 to 3). The text has been edited by Seetha Padmanabhan and published by Kendriya Sanskrit Vidyapeetha, Tirupati (1969).

### 1. The Descent of the Āgama

नमो जगन्निवासाय वासुदेवाय साक्षिणे ।
निर्गुणाय परव्योम्ने शङ्खचक्रगदाधृते ॥ १ ॥

महर्षयः पुरा केचिद् ब्रह्म जिज्ञासवो महीम् ।
पर्यटन्तो महर्षीणामग्निहोत्राणि जुह्वताम् ॥ २ ॥

पुत्रदारैः समेतानामाश्रमा(मां)श्चैव सर्वशः ।
गत्वा तत्र स्थितान् पूर्वं नमस्कृत्य यथाक्रमम् ॥ ३ ॥

पप्रच्छुः केन शास्त्रेण कर्तव्यं ब्रह्मज्ञानं भविष्यति ।
आराधनं भगवतः कर्तुं शास्त्रेण केन वा ॥ ४ ॥

तत्कर्म केन शास्त्रेण कर्तव्यं भगवत्प्रियम् ।
तत्सर्वं ब्रूत मुनयः संसारार्णवमज्जताम् ॥ ५ ॥

इति पृष्टेषु तेष्वेकः कहोलो नाम वै मुनिः ।
वयं तु कर्मकाण्डोक्तकर्म ब्रह्मैव वेदिनः ॥ ६ ॥

मुनयः—

उपास्महे विष्णुमेव ह्यग्निहोत्रादिरूपिणम् ।
को वा जानाति तद्विद्यां क्वास्ते स च महामुनिः ॥ ७ ॥

कहोलः—

तानुवाच महाभागान् प्रसन्नेनान्तरात्मना ।
[कहोलो वचनं श्रुत्वा मुनीस्तानिदमब्रवीत् ॥ ८ ॥]

ब्रह्मविद्याप्राप्युपायं शृणुध्वं मुनिपुङ्गवाः ।
मेरोरुत्तरतः पार्श्वे सिद्धगन्धर्वसेविते ॥ ९ ॥

सिद्धाश्रमे ब्रह्मसुतः एकतो नाम वै मुनिः ।
स तु श्रीशादवाप्तं तच्छास्त्रमित्यनुशुश्रुमः ॥ १० ॥

इति तस्य वचः श्रुत्वा नमस्कृत्य प्रतस्थिरे ।
मेरोरुत्तरमासाद्य प्रणेमुस्तं महामुनिम् ॥ ११ ॥

आगतानेकतो दृष्ट्वा संपूज्य तदनन्तरम् ।
[स्वागतादिपरिप्रश्नैः कन्दमूलफलादिभिः ॥ १२ ॥

तृप्तांस्तानेकतो वाक्यमिदमाह तपस्विनः ।]
मदनुग्रहाय मुनय आगता नात्र संशयः ॥ १३ ॥

अथापि ब्रूत वः कार्यं किमस्त्यत्र महर्षयः ।
इति तस्य वचः श्रुत्वा मुनयो हृष्टमानसाः ॥ १४ ॥

सर्वे प्राञ्जलयः स्थित्वा नमस्कृत्य यथाविधि ।
भगवन् पृथिवी सर्वामटामो ब्रह्मणः सुत ॥ १५ ॥

वेदितुं ब्रह्मविद्या वै ज्ञाता तस्य न विद्यते ।
कहोलवचनात् मेरुमागता मुनिपुङ्गव ॥ १६ ॥

त्वं ब्रह्मवित् ब्रह्मसुतः सर्वशास्त्रार्थसारवित् ।
तपसा च परं ब्रह्म दृष्टवांश्च श्रियः पतिम् ॥ १७ ॥

तस्माच्छास्त्रमधीतं यन्महर्षे तदुपादिश ।
आर्तानां संसृतेर्भीति प्राप्तानां नो भवान् गतिः ॥ १८ ॥

इति तेषां वचः श्रुत्वा प्रसन्नेनान्तरात्मना ।
एकतः प्रीणयन् सर्वान् इदं मधुरमब्रवीत् ॥ १९ ॥

स्वागतं वो महर्षयो विन्ध्यशैलनिवासिनः ।
तत्त्वं वदामि शृणुत पुरावृत्त मुनीश्वराः ॥ २० ॥

[युष्माकं दर्शनाकाङ्क्षी मेरौ वासमकल्पयम् ।
मद्भाग्याद्भगवानद्य वासुदेवः सनातनः ॥ २१ ॥

युष्माकं मानसमनुप्रविश्य प्रेषयत्स्वयम् ।
तदद्य सफलं जन्म भवतां ज्ञानदानतः ॥ २२ ॥

श्रीनिकेतपद लप्स्ये भक्तसूरिनिषेवितम् ।
आदौ युगे यथा श्रीशाद् ब्रह्मज्ञानमवाप्तवान् ॥ २३ ॥

तत्क्रमेणैव वक्ष्यामि शृणुध्वं मुनिपुङ्गवाः ।]
वयं तु ब्रह्मणा सृष्टा एकतश्च द्वितस्त्रितः ॥ २४ ॥

तेष्वहं प्रथमो नाम्ना एकतो मुनिपुङ्गवाः ।
संसारासारतां ज्ञात्वा मेरोरुत्तरमागमम् ॥ २५ ॥

श्रीपति हरिमुद्दिश्य तपाम्यहमहर्निशाम् ।
ततो वर्षसहस्रान्ते भगवान् भक्तवत्सलः ॥ २६ ॥

दर्शयामास चात्मानं अपश्यं श्रीनिकेतनम् ।
दृष्ट्वोत्फुल्लमना देवं देवीं च तदनु श्रियम् ॥ २७ ॥

आनन्दसागरे मग्नस्ततोऽस्तौषं हरि श्रियम् ।
नमः पङ्कजनेत्राय नमस्ते पीतवाससे ॥ २८ ॥

नमः पङ्कजनाभाय नमस्ते पङ्कजांघ्रये ।
[अरूपाय सुरूपाय सच्चिदानन्दमूर्तये ॥ २९ ॥]

नमो हिरण्यगर्भादिस्रष्टे ब्रह्मस्वरूपिणे ।
नमः पद्मासमेताय भक्तरक्षणमूर्तये ॥ ३० ॥

अवतारविशेषाणां धारिणे वनमालिने ।
क्षीरोदमथनोद्भूते जगद्रक्षणदीक्षिते ॥ ३१ ॥

नमः पङ्कजमालिन्यै नमस्तेऽमृतयोनये ।
त्रैलोक्यमात्रे शरणं प्रपन्नोऽस्मि च वामहम् ॥ ३२ ॥

इति नत्वोत्थितं मां तु शरण्यो भक्तवत्सलः ।
नारायणस्ततस्तुष्टः श्रिया सह जगत्पतिः ॥ ३३ ॥

प्रसन्नोऽस्मि विधेः पुत्र मत्तः किं वरमिच्छसि ।
[मत्तो वृणीष्व वरदाद्वरमित्यब्रवीत्तदा ॥ ३४ ॥]

हरेरित्थं वचः श्रुत्वा कृताञ्जलिपुटोऽब्रुवम् ।
जन्मकोटिसहस्राणि मयावाप्तानि वै हरे ॥ ३५ ॥

अतः संसारजलधेरुत्तीर्य भगवन्नहम् ।
श्रुतिस्मृतीतिहासाद्यैः प्रोक्तं विष्णोः परं पदम् ॥ ३६ ॥

यत्र स्थितानां भक्तानामावृत्तिर्न भवेत् किल ।
नय मां तत्पदं देव भीतं संसारसागरात् ॥ ३७ ॥

[एष मेऽस्तु वरः कामः नान्यं किंचिद् वृणे हरे ।]
इति संप्रार्थ्यमानं मां भगवान् प्रत्यभाषत ॥ ३८ ॥

मुने ददामि ते लोकमपुनर्भवलक्षणम् ।
अथापि किञ्चिद्वक्ष्यामि तत्कुरुष्व महामते ॥ ३९ ॥

इयं श्रीर्मन्मुखादेकं लोकस्य हितकाम्यया ।
अधीतिनी शास्त्रमेकमुपदेष्टुं तवेच्छति ॥ ४० ॥

तस्य पात्रं त्वमेवैकस्तदधीहि श्रियो मुखात् ।
किं च त्वं कतिचित्कालादागच्छन्ति महर्षयः ॥ ४१ ॥

वासिष्ठादिषु गोत्रेषु ह्युत्पन्ना दीक्षिता मया ।
गर्भ एव च तेषां त्वमिदं शास्त्रमुपादिश ॥ ४२ ॥

ततो मल्लोकमागत्य मोदन्तां नित्यसूरिवत् ।
इत्युक्त्वा श्रियमालोक्य मुनये त्वमुपादिश ॥ ४३ ॥

नारायणमुखोद्गीतं श्रुत्वा श्रीर्मुनिपुङ्गवाः ।
उपादिशत् पाञ्चरात्रं श्रीप्रश्नमितिसंज्ञितम् ॥ ४४ ॥

तयोः पूजामकरवं यथावन्मुनिपुङ्गवाः ।
ततस्तु भगवानाह बद्धाञ्जलिपुटस्थितम् ॥ ४५ ॥

[पूजामपि च कृत्वा मां पुरःस्थितमथो हरिः ।]
उपदिष्टमिदं शास्त्र पावनं मोक्षसाधकम् ॥ ४६ ॥

नाभक्ताय सकामाय न च मद्द्वेषिणे स्त्रियै ।
न तस्करायानृजवे नोपदेष्टुं त्वमर्हसि ॥ ४७ ॥

इत्युक्त्वान्तर्हितो देवः श्रिया सार्धं जगत्पतिः ।
केषु गोत्रेषु चोत्पन्ना ब्रूत यूयं महर्षयः ॥ ४८ ॥

वेदशिराः—

भरद्वाजो वसिष्ठश्च विश्वामित्रस्तथा परः ।
कौण्डिन्यश्चापि मुनयो ह्यस्मद्गोत्रप्रवर्तकाः ॥ ४९ ॥

अहं वेदशिरा नाम कवषश्च तथारुणिः ।
भरद्वाजश्च चत्वारो भगवत्प्रीतिभाजनाः ॥ ५० ॥

गर्भे दीक्षामनुप्राप्तास्तस्मान्मोक्षार्थसाधकम् ।
[शिष्यतां समनुप्राप्ताननुगृह्णातु नो भवान् ॥ ५१ ॥

श्रीप्रश्नमिति यच्छास्त्रं श्रियो वक्त्रात् त्वया श्रुतम् ।
मोक्षदं सर्वशास्त्रार्थसारमाराधनादिकम् ॥ ५२ ॥]

श्रियो मुखात् त्वया प्राप्तं ब्रूहि ब्रह्मन् हिताय नः ।
आराधनं भगवतः कृत्वा मोक्षमवाप्नुमः ॥ ५३ ॥

इति संप्रार्थितो विद्वानेकतः श्रीपति नमन् ।
मनसा समनुध्यात्वा वक्तुमेवोपचक्रमे ॥ ५४ ॥

* * *

## 2. The Two-fold purpose in creation : Karma and Jñāna

श्रीरुवाच—

जगत्कारण पद्माक्ष शङ्खचक्रगदाधर ।
ब्रह्मरुद्रादिदेवेड्यः सृष्टिस्थित्यन्तकारक ॥ १ ॥

अनादिमध्यनिधन भक्तवत्सल निर्गुण ।
पृच्छामि संशयं किंचित् तन्मे व्याख्यातुमर्हसि ॥ २ ॥

कर्माणि जन्तून् विश्वेश न त्यजन्ति कदाचन ।
जन्तवोऽपि च कर्माणि प्रकृति प्राप्य नित्यशः ॥ ३ ॥

माया तु प्रकृतिर्नाम त्वया सृष्टा जगत्पते ।
ब्रह्मादिप्राणिनः सर्वे विचित्रगतिमैश्वरीम् ॥ ४ ॥

मायां प्राप्य बहून् क्लेशान् सुखमित्यामनन्ति हि ।
माययापहृतज्ञानाः सुखदुःखविभेदनम् ॥ ५ ॥

न जानन्ति जगत्स्वामिस्त्वन्माया हीदृशी किल ।
विद्यया तपसा वापि वेदाध्ययनतोऽपि वा ॥ ६ ॥

धर्मशास्त्रादिपाठेन पुराणपठनेन वा ।
यज्ञादिकर्मभिर्वापि नित्यकर्मादिभिर्हरे ॥ ७ ॥

मायां त्वदीयां जित्वा यः कश्चिन्नो मोक्षमेष्यति ।
परिवृत्तावनेकानां युगानामपि वल्लभ ॥ ८ ॥

कश्चित् प्राणी समायाति मायया मोहितेषु वै ।
ज्ञातो भवद्भिस्तद्धेतुर्न जाने भगवन्नहम् ॥ ९ ॥

विना भवन्तं क्षणिकं न याम्यन्यत्र पूरुष ।
तथापि न मया ज्ञातं मोक्षद वेदशास्त्रकम् ॥ १० ॥

कार्य वापि समुद्दिष्टं भवता न प्रकाशितम् ।
न रहस्यं यदि भवेद् भक्ताया मम वत्सल ॥ ११ ॥

सर्वलोकहितार्थाय दयासिन्धो जगत्पते ।
उपादिश जगत्स्वामिन् अमी मुक्तिमवाप्नुयुः ॥ १२ ॥

भगवानुवाच—

पद्मे त्वत्तोऽपि मे गोप्यं त्रैलोक्ये नास्ति वल्लभे ।
अवतारादिषु मया सह तिष्ठसि सुव्रते ॥ १३ ॥

इत्थं स्थिते मया गोप्यं कि वास्ति जगदीश्वरी ।
सर्वज्ञा ह्यसि मां देवि त्वमज्ञेव मम प्रिये ॥ १४ ॥

लोकस्य हितमिच्छन्ती मां पृच्छसि वरानने ।
लोकमातुरयं प्रश्नस्तवैवौपयिकं हि सः ॥ १५ ॥

आदितो देवि वक्ष्यामि ब्रह्मादीनामहं पुरा ।
नोपादिशं मुक्तिशास्त्रं जगतो वृद्धये रमे ॥ १६ ॥

ब्रह्मकल्पे पुरा प्राप्ते सर्व सलिलमावृतम् ।
योगलक्ष्मीस्वरूपेण श्रीवत्सेन्तर्हिता ह्यसि ॥ १७ ॥

तमसा सर्वलोकेषु व्याप्तेषु सचराचरम् ।
लोकं मदुदरं प्राप्य स्थितं ब्रह्मसमन्वितम् ॥ १८ ॥

तदा बालं समास्थाय रूपं जलनिधावपि ।
वटपत्रे शयानोऽहं तं कालमनयं रमे ॥ १९ ॥

ब्रह्मरात्र्यां व्यतीतायां मत्सङ्कल्पादयं प्रिये ।
मन्नाभिकमलोद्भूतो ब्रह्मा लोकपितामहः ॥ २० ॥

कर्णिकायां क्वचित्कालं तिष्ठन्नन्तर्हितं जले ।
अजानंश्चिन्तयन्नेव कश्चित्कालमवस्थितः ॥ २१ ॥

ततस्तस्य मतिर्जाता पङ्कजोपर्यहं स्थितः ।
पङ्कजस्य क्वचिद्रन्ध्रमन्तरा (न)स्थितिर्भवेत् ॥ २२ ॥

कस्मिन् बद्धः पङ्कजोऽयं तं ज्ञास्यामीति निश्चितः ।
पद्मस्य नालरन्ध्रेण गन्तुमन्तरभित्वरन् ॥ २३ ॥

मार्गमन्विष्यमाणस्य नादान्मार्ग तदा ह्यहम् ।
चिन्तामास्थाय स विधिस्तप आतिष्ठदव्ययम् ॥ २४ ॥

ततो वर्षसहस्रान्ते हंसरूपं समाश्रितः ।
स्थित्वाकाशे त्रयीरूपं कर्मकाण्डमयं शुभम् ॥ २५ ॥

जगत्सृष्टेरादिकन्दमुपादिक्षं विधेः पुरा ।
ततः संतुष्टहृदयस्त्रयी कर्मप्रवर्तिनीम् ॥ २६ ॥

प्राप्य ब्रह्मा तदा मां तु मानसैरर्चयत्सुमैः ।
अनुज्ञया मम विधिः सत्यलोकमुपेयिवान् ॥ २७ ॥

मरीच्यादीन् पुरा सृष्ट्वा तेभ्यो वेदानुपादिशत् ।
तेऽपि प्राप्य त्रयीं तद्वदसृजन् प्राणिनो बहून् ॥ २८ ॥

स्थावराणि च सर्वाणि वृक्षगुल्मलता रमे ।
इत्थं सृष्ट्वा कर्मकाण्डमधीयानाश्च नित्यशः ॥ २९ ॥

कुर्वाणः कर्मणो भेदांस्तेषु तृप्ताश्च देवताः ।
प्रावर्तयंश्च भूलोके कर्मकाण्डाननेकधा ॥ ३० ॥

धर्मार्थकामरूपाणामर्थानामुपदेशतः ।
मानवास्तेषु विश्वासमनुप्राप्ताः सुमध्यमे ॥ ३१ ॥

निवृत्तिशास्त्रमपरं वेदं वापि तदर्थकम् ।
नापृच्छन्मां विधिमुखा नावोचंश्चाप्यह रमे ॥ ३२ ॥

संवत्सरं तदर्धं वा गुरुशुश्रूषया ततः ।
सच्छिष्यायोपदेष्टव्यमिति शास्त्रेषु वर्तते ॥ ३३ ॥

तद्विधि समतिक्रम्य रहस्यं शास्त्रमुत्तमम् ।
पद्ममालिनि नावोचं वेद तद्बोधक च तम् ॥ ३४ ॥

श्रीः—

नमामि पुण्डरीकाक्ष जगदादे दयानिधे ।
तव शक्तिर्विचित्रा हि गुणमायाविमोहिता ॥ ३५ ॥

कथं ज्ञातु प्रवर्तन्ते तच्छास्त्र वा तदर्थकम् ।
वेद वापि महोदारसंसारपतिता इमे ॥ ३६ ॥

मयि प्रीतिस्तव यदि वेदं तच्छास्त्रमादितः ।
उपादिश हरे सर्व लोकानुग्रहकाम्यया ॥ ३७ ॥

भगवान्—

वेदमेकायन नाम वेदानां शिरसि स्थितम् ।
तदर्थकं पाञ्चरात्र मोक्षदं तत्क्रियावताम् ॥ ३८ ॥

यस्मिन्नेको मोक्षमार्गः वेदे प्रोक्तः सनातनः ।
मदाराधनरूपेण तस्मादेकायन भवेत् ॥ ३९ ॥

रात्रिरज्ञानमित्युक्तं पञ्चेत्यज्ञाननाशकम् ।
तच्छास्त्रं पञ्चरात्र स्यादन्वर्थस्यानुरोधत· ॥ ४० ॥

सार्धकोटिप्रमाणेनानुष्टुभा छन्दसा रमे ।
वेदवन्नित्यमेतच्च मल्लोके नित्यसूरयः ॥ ४१ ॥

आमनन्ति सदा भक्त्या मनसा पूजयन्ति च ।
अन्तरैतद्वेदशास्त्रज्ञान मोक्षप्रद न हि ॥ ४२ ॥

यस्मिन् ज्ञानेन सहितं योगश्चापि विशेषतः ।
आलयानां च निर्माणं बिम्बनिर्माणमेव च ॥ ४३ ॥

एतेषां लक्षणं चापि सविशेषमुदाहृतम् ।
प्रतिष्ठा चाग्निकार्य च प्रायश्चित्तमशेषतः ॥ ४४ ॥

पूजकानां च दीक्षा च सिद्धान्ताः समुदीरिताः ।
मद्यागा विविधा· प्रोक्ता उत्सवा बहुभेदवत् ॥ ४५ ॥

मन्त्रोद्धारादिकार्याणि बहून्यस्मिन् स्थितानि हि ।

श्री·—

कथं महति शास्त्रेऽस्मिन् संसारे पतिता जनाः ॥ ४६ ॥

प्रवर्तन्ते देवदेव ज्ञानं वापि कथं भवेत् ।
श्रद्धा वापि कथं तेषा संसारेषु निमज्जताम् ॥ ४७ ॥

वासनाविवशाः केचिज्जगदाहुरनीश्वरम् ।
नित्यं शरीरं केचिच्च संसृतेर्नास्ति सौख्यदम् ॥ ४८ ॥

एवं बहुविधा भेदा जन्तूनां मतयोऽन्यथा ।
भ्रमन्ति तन्निवृत्तिस्तु कथं स्याज्जगतीपते ॥ ४९ ॥

महान्तो ह्युपदेष्टारो न सन्ति जगतीतले ।
उपदिष्टं न गृह्णन्ति जनाः कामविमोहिताः ॥ ५० ॥

तथापि कृपया मेऽद्य शास्त्र संगृह्य सारवत् ।
आदाय सात्त्विकं भागं पञ्चरात्रमुपादिश ॥ ५१ ॥

भगवान्—

त्वयोक्तमुचितं देवि विधिप्रभृतिदेवताः ।
भ्रमन्ते संसृति प्राप्य कि पुनर्मनुजा भुवि ॥ ५२ ॥

त्वयाहं प्रार्थितो देवि पीयूषमुदधेर्यथा ।
सात्त्विकं भागमुद्धृत्य लोकस्य हितकाम्यया ॥ ५३ ॥

वदामि कमले तुभ्यं शृणु लोकहितंकरि ।
मन्मूर्तयः पञ्चविधा वदन्त्युपनिषत्सु च ॥ ५४ ॥

परव्यूहो हार्द इति विभवोऽर्चेति भेदतः ।
वैकुण्ठेऽस्मिन् परव्यूहो सदा पश्यन्ति सूरयः ॥ ५५ ॥

योगतत्त्वेन मुनयः सदा मां ध्यानगोचरम् ।
पश्यन्ति देवि हृन्मध्ये तस्मान्मां हार्द उच्यते ॥ ५६ ॥

अवतारेषु तत्काले पश्यन्तोऽपि जना भुवि ।
अवजानन्ति मुनयो जानन्ति ज्ञानिनो रमे ॥ ५७ ॥

* * *

## 3. The Principles of Yoga

श्रीः—

भगवन् योगतत्त्वाख्यं ज्ञानपूर्वं वदस्व मे ।

भगवान्—

सर्वे देवा महर्षयो मनुष्याः पशवस्तथा ॥ १ ॥

मन्मायया निबद्धास्ते तन्निकृन्तनमद्भुतम् ।
योगसारं प्रवक्ष्यामि ज्ञानतत्त्वसमन्वितम् ॥ २ ॥

जन्ममृत्युजराव्याधिनाशनं मृत्युतारकम् ।
नानामार्गैश्च दुष्प्रापं कैवल्यं परमं पदम् ॥ ३ ॥

अनिर्देश्यमगम्यं यत् सर्वगं सर्वसाक्षिमत् ।
निष्कलं निर्मलं शान्तं सर्वातीतं निरञ्जनम् ॥ ४ ॥

परं ब्रह्मेति यत्प्रोक्तं तद्योगैरेव गम्यते ।
जीवस्य गुणसङ्गेन कामक्रोधादयोऽरयः ॥ ५ ॥

बध्नन्ति नित्यदा मुक्तं पाशैः संसाररूपिभिः ।
तस्मात्पाशाद्विनिर्मुक्तेरुपायं कथयामि ते ॥ ६ ॥

योगहीनं कथं ज्ञानं मोक्षदं स्याद्वरानने ।
योगोऽपि ज्ञानहीनस्तु न क्षमः स्यात् प्रदर्शितुम् ॥ ७ ॥

तस्मान्मुमुक्षुर्ज्ञानेन धारयेद्योगमद्भुतम् ।
अज्ञानादेव संसारो ज्ञानादेव हि मुच्यते ॥ ८ ॥

ज्ञानप्रयोजनं कि तत् ज्ञेयवस्तुप्रदर्शनम् ।
सर्वाकारं निराकारं शुद्धस्फटिकसनिभम् ॥ ९ ॥

चतुर्भुजं वासुदेव शङ्खचक्रगदाधरम् ।
आनन्दजलधिं शुद्धं निर्गुणं पीतवाससम् ॥ १० ॥

ब्रह्मादिसर्वदेवानामुत्पत्तेः कारणं परम् ।
किंचित् स्मितमुखं देवं पुण्डरीकायतेक्षणम् ॥ ११ ॥

गुरोर्मुखादधीतेन पथा योगेन मानवः ।
ध्यायन् भगवतो रूपं योग कुर्याद्विचक्षणः ॥ १२ ॥

एतज्ज्ञानमिति प्रोक्तं योगसारमथोच्यते ।
मन्त्रयोगो लयश्चैव तथा परिचयः स्मृतः

निष्पत्तिश्चेत्यवस्था च योगेषु परिकीर्तिताः ।
एतेषा लक्षण वक्ष्ये शृणुष्व कमलेक्षणे ॥ १४ ॥

मातृकादियुतं मन्त्र द्वादशाब्दं जपेच्छुचिः ।
क्रमेण लभते ज्ञानमणिमादिगुणान्वितम् ॥ १५ ॥

अल्पबुद्धिरिमं योग सेवते साधकाधमः ।
लययोगश्चित्तलयः कोटिशः परिकीर्तितः ॥ १६ ॥

गच्छंस्तिष्ठन् स्वपन् भुञ्जन् ध्यायन्निष्कलमीश्वरम् ।
स एव लययोगाख्यो हठयोगमतः शृणु ॥ १७ ॥

यमश्च नियमश्चोभावासनं प्राणसयमः ।
प्रत्याहारो धारणा च ध्यानं भ्रूमध्यमे हरेः ॥ १८ ॥

समाधिः समतावस्था साष्टाङ्गो योग उच्यते ।
महामुद्रा महाबन्धो महावेधश्च खेचरी ॥ १९ ॥

जालन्धरोड्डियाणश्च मूलबन्धस्तथैव च ।
दीर्घप्रणवसन्धानं सिद्धान्तश्रवणं तथा ॥ २० ॥

वज्रोली चामरोली च सहजोली त्रिधा मता ।
एतेषा लक्षण देवि प्रत्येकं शृणु तत्त्वतः ॥ २१ ॥

लघ्वाहारो यमेष्वेको मुख्यो भवति तत्त्वतः ।
अहिसा नियमेष्वेका मुख्या पद्मसमुद्भवे ॥ २२ ॥

सिद्धं पद्म तथा सिहं भद्रं चेति चतुष्टयम् ।
प्रथमाभ्यासकाले तु विघ्नः स्याद्बहुधा रमे ॥ २३ ॥

आलस्यं कत्थनं धूर्तगोष्ठीमन्त्रादिसाधनम् ।
धातुस्त्रीलौल्यकादीनि मृगतृष्णामयानि वै ॥ २४ ॥

ज्ञात्वा सुधीस्त्यजेत्सर्वान् विघ्नान् पुण्यप्रभावतः ।
प्राणायामं ततः कुर्वन् पद्मासनगत स्वयम् ॥ २५ ॥

सुशोभनं मठं कुर्यात् सूक्ष्मद्वारं तु निर्व्रणम् ।
सुष्ठु लिप्तं गोमयेन सुधया वा प्रयत्नतः ॥ २६ ॥

दिने दिने च समृष्टं संमार्जन्या विशेषत· ।
वासित च सुगन्धेन धूपितं गुग्गुलादिभिः ॥ २७ ॥

तत्रोपविश्य मेधावी पद्मासनमथास्थितः ।
ऋजुकाय· प्राञ्जलिश्च प्रणमेदिष्टदेवताम् ॥ २८ ॥

ततो दक्षिणहस्तस्य त्वङ्गुष्ठेनैव पिङ्गलाम् ।
निरुध्य पूरयेद्वायुमिडया तु शनैः शनैः ॥ २९ ॥

यथाशक्त्यनुरोधेन ततः कुर्याच्च कुम्भकम् ।
पुनस्त्यजेत् पिङ्गलया शनैरेव न वेगतः ॥ ३० ॥

पुनः पिङ्गलयापूर्य पूरयेदुदर शनैः ।
धारयित्वा यथाशक्ति रेचयेदिडया शनैः ॥ ३१ ।

यया त्यजेत्तयापूर्य धारयेदविरोधतः ।
जानू प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम् ॥ ३२ ॥

अङ्गुलिस्फोटन कुर्यात् सा मात्रा परिकीर्तिता ।
इडया वायुमापूर्य शनैः षोडशमात्रया ॥ ३३ ॥

कुम्भयेत् पूरित पश्चाच्चतुःषष्ट्या तु मात्रया ।
रेचयेत् पिङ्गलानाडया द्वात्रिंशन्मात्रया पुनः ॥ ३४ ॥

पुनः पिङ्गलयाऽऽपूर्य पूर्ववत्सुसमाहितः ।
प्रातर्मध्यन्दिने सायमर्धरात्रे च कुम्भकान् ॥ ३५ ॥

शनैरशीतिपर्यन्तं चतुर्वारं समभ्यसेत् ।
एवं मासत्रयाभ्यासान्नाडीशुद्धिर्भविष्यति ॥ ३६ ॥

यदा तु नाडीशुद्धिः स्यात् तदा चिह्नानि बाह्यतः ।
जायन्ते योगिनो देहे तानि वक्ष्याम्यशेषतः ॥ ३७ ॥

शरीरलघुता दीप्तिर्जाठराग्निविवर्धनम् ।
कृशत्वं च शरीरस्य तदा जायेत निश्चलम् ॥ ३८ ॥

योगविघ्नकराहारं वर्जयेद्योगिसत्तमः ।
लवणं सर्षपं चाम्लमुष्णं तीक्ष्णं च रूक्षकम् ॥ ३९ ॥

शाकजातं रामठादि वह्निस्त्रीपथसेवनम् ।
प्रातःस्नानोपवासादिकायक्लेशाश्च वर्जयेत् ॥ ४० ॥

अभ्यासकाले प्रथमं शस्तं क्षीराज्यभोजनम् ।
गोधूममुद्गशाल्यन्नं योगवृद्धिकरं विदुः ॥ ४१ ॥

ततः परं यथेष्टं तु शक्तः स्याद्वायुधारणे ।
यथेष्टधारणाद्वायोः सिध्येत् केवलकुम्भकम् ॥ ४२ ॥

केवले कुम्भके सिद्धे रेचपूरविवर्जिते ।
न तस्य दुर्लभ किंचित् त्रिषु लोकेषु विद्यते ॥ ४३ ॥

प्रस्वेदो जायते पूर्व मर्द तेन च कारयेत् ।
ततोऽतिधारणाद्वायोः क्रमेणैव शनैः शनैः ॥ ४४ ॥

कफो भवति देहस्य आसनस्थस्य योगिनः ।
ततोऽधिकतराभ्यासाद् दारुणात्स्वेद उद्भवेत् ॥ ४५ ॥

तदा च दार्दुरो भाव उत्प्लुत्योत्प्लुत्य गच्छति ।
पद्मासनस्थितो योगी तदा गच्छति भूतलम् ॥ ४६ ॥

ततोऽधिकतराभ्यासाद् भूमित्यागश्च जायते ।
पद्मासनस्थ एवासौ भूमिमुत्सृज्य वर्तते ॥ ४७ ॥

अतिमानुषचेष्टादि तदा सामर्थ्यमुद्भवेत् ।
न दर्शयेच्च सामर्थ्य यदि कुर्यात्तपोव्ययः ॥ ४८ ॥

सुख वा यदि वा दुःखं प्राप्तं न व्यथयेत्तदा ।
अल्पमूत्रपुरीषश्च स्वल्पनिद्रा च जायते ॥ ४९ ॥

कीलवो दूषिका लाला स्वेददुर्गन्धतानने ।
एतानि सर्वथा तस्य न जायन्ते ततः परम् ॥ ५० ॥

ततोऽधिकतराभ्यासाद् बलमुत्पद्यते बहु ।
येन भूचरसिद्धः स्याद् भूचराणां जले क्षमः ॥ ५१ ॥

व्याघ्रादिसिहशरभान् बाहुभ्या हन्ति योगवित् ।
अभ्यसेत् प्लुतमोकार तेन पापो विनश्यति ॥ ५२ ॥

सर्वविघ्नहरो मन्त्र. प्रणवः सर्वदोषहा ।
एवमभ्यासयोगेन घटावस्था समुद्भवेत् ॥ ५३ ॥

प्राणोऽपानो मनो बुद्धिर्जीवात्मपरमात्मनो· ।
अन्योन्यस्याविरोधेन घटते ज्ञानमद्भुतम् ॥ ५४ ॥

घटावस्थेति सा प्रोक्ता तच्चिह्नानि वदामि ते ।
पूर्व यः कथितोऽभ्यासश्चतुर्थांश परित्यजेत् ॥ ५५ ॥

दिवा वा यदि वा कुर्यात् साय वा याममात्रकम् ।
एकवारं प्रतिदिन कुर्यात् केवलकुम्भकम् ॥ ५६ ॥

इन्द्रियाणीन्द्रियार्थेभ्यो यत् प्रत्याहरणं स्फुटम् ।
योगी कुम्भकमास्थाय प्रत्याहारः स उच्यते ॥ ५७ ॥

यद्यत्पश्यति चक्षुर्भ्यां तत्तदात्मेति भावयेत् ।
[यद्यच्छृणोति कर्णाभ्या तत्तदात्मेति भावयेत्] ॥ ५८ ॥

लभते नासया यद्यत्तत्तदात्मेति भावयेत् ।
जिह्वया यद्रसं ह्यत्ति तत्तदात्मेति भावयेत् ॥ ५९ ॥

त्वचा यद्यत् स्पृशेद्योगी तत्तदात्मेति भावयेत् ।
एवं भावयतस्तस्य सामर्थ्यमतिमानुषम् ॥ ६० ॥

दूरश्रुतिर्दूरदृष्टिः क्षणाद् दूरगतिस्तथा ।
वाक्सिद्धिः कामरूपत्वमदृश्यत्वं ततो भवेत् ॥ ६१ ॥

मलमूत्रविलेपेन लोहादेः स्वर्णता भवेत् ।
खे गतिस्तस्य जायेत पञ्चताभ्यासयोगतः ॥ ६२ ॥

तदा बुद्धिमता भाव्यं योगिनो योगसिद्धये ।
एते विघ्ना महासिद्धेर्न रमेत्तेषु बुद्धिमान् ॥ ६३ ॥

न दर्शयेत् स्वसामर्थ्य यस्य कस्यापि योगिराट् ।
यथा मूढो यथा मूर्खो यथा बधिर एव च ॥ ६४ ॥

तथा वर्तेत लोकस्य स्वसामर्थ्यस्य गुप्तये ।
शिष्याश्च स्वस्वकार्येषु प्रार्थयन्ति न संशयः ॥ ६६ ॥

एव भवेद् घटावस्था संतताभ्यासयोगतः ।
अनभ्यासवतस्तस्य वृथा गोष्ठ्या न सिध्यति ॥ ६७ ॥

तस्मात् सर्वप्रयत्नेन योगमेव सदाभ्यसेत् ।
ततः परिचयावस्था जायतेऽभ्यासयोगतः ॥ ६८ ॥

वायुः परिचितो यत्नाद्धावयित्वा तु कुण्डलीम् ।
अग्निना च सुषुम्नायां प्रविशेदनिरोधतः ॥ ६९ ॥

वायुना सह चित्तं च प्रविशेच्च महापदम् ।
यस्य चित्तं स्वपवनः सुषुम्ना प्रविशेदिह ॥ ७० ॥

भूमिरापोऽनलो वायुराकाशं चेति पञ्चकम् ।
एषु पञ्चसु देहानां धारण पञ्चधोच्यते ॥ ७१ ॥

आ पादाज्जानुपर्यन्तं पृथिवीस्थानमुच्यते ।
पृथिवी चतुरश्रं च पीतवर्ण लवर्णकम् ॥ ७२ ॥

पार्थिवे वायुमारोप्य लकारेण समन्वितम् ।
ध्यायश्चतुर्मुखाकारं चतुर्वक्त्रं हिरण्मयम् ॥ ७३ ॥

धारयेत् पञ्च घटिकाः पृथिवीजयमाप्नुयात् ।
पृथिवीयोगतो मृत्युर्न भवेत्तस्य योगिनः ॥ ७४ ॥

आ जानोः पायुपर्यन्तमपां स्थानमुदाहृतम् ।
[आपोऽर्धचन्द्रं शुक्लं च वं बीज परिकीर्तितम् ॥ ७५ ॥]

वारुणे वायुमारोप्य वकारेण समन्वितम् ।
स्मरन्नारायण देवं चतुर्बाहुं किरीटिनम् ॥ ७६ ॥

नीलमेघनिभं शान्त पीतवाससमच्युतम् ।
धारयेत् पञ्च घटिकाः सर्वपापैः प्रमुच्यते ॥ ७७ ॥

ततो जलाद् भयं नास्ति जले मृत्युर्न विद्यते ।
आ पायोर्हृदयान्तं च वह्निस्थानं प्रकीर्तितम् ॥ ७८ ॥

वह्निस्त्रिकोणं रक्तं च रेफाक्षरसमन्वितम् ।
सङ्कर्षणं चतुर्बाहुं बलज्ञानगुणान्वितम् ॥ ७९ ॥

शङ्खचक्रगदापाणिं सुप्रसन्नमनुस्मरन् ।
धारयेत् पञ्च घटिकाः वह्निनासौ न दह्यते ॥ ८० ॥

तन्मण्डलं प्रविष्टस्य नाग्निर्दहति वै तनुम् ।
हृदयादाभ्रुवोर्मध्यं वायुस्थानं प्रकीर्तितम् ॥ ८१ ॥

वायुः षट्कोणकं कृष्णं यकाराक्षरभासुरम् ।
वायोः स्थाने ब्रह्मरूपमनिरुद्ध चतुर्भुजम् ॥ ८२ ॥

धारयेत् पञ्च घटिका वायुवद् व्योमगो भवेत् ।
वायोर्भयं तथा मृत्युर्न भवेद्योगिनो रमे ॥ ८३ ॥

आ भ्रूमध्यात्तु मूर्धान्तमाकाशस्थानमुच्यते ।
व्योमवृत्तं च धूम्रं च हकाराक्षरदीप्तिमत् ॥ ८४ ॥

आकाशे वायुमारोप्य वासुदेव चतुर्भुजम् ।
शुद्धस्फटिकसंकाशं शङ्खचक्रगदाधरम् ॥ ८५ ॥

रमापति चतुर्बाहु षाड्गुण्यपरिकर्मित् ।
आकाशे धारणात्तस्य खेचरत्व भवेद् ध्रुवम् ॥ ८६ ॥

यत्र कुत्र स्थितो वापि सुखमत्यन्तमश्नुते ।
एवं च धारणाः पञ्च कुर्याद्योगी विचक्षणः ॥ ८७ ॥

ततो दृढशरीरः स्यान्मृत्युस्तस्य न विद्यते ।
ब्रह्मणः प्रलये चापि न नश्यति स योगिराट् ॥ ८८ ॥

समभ्यसेद् तथा योगं घटिकाः षष्टिमेव च ।
वायुं निरुध्य चाकाशे देवतामिष्टदामिति ॥ ८९ ॥

एवं प्रतिदिनं कुर्वन् कामक्रोधविवर्जितः ।
भगवन्त वासुदेवं तोषयेद् योगिसत्तमः ॥ ९० ॥

अभिकाङ्क्षति देवादिशरीरं सुखलिप्सया ।
तच्छरीरमवाप्नोति तत्र तत्रापि मोदते ॥ ९१ ॥

अणिमादिगुणेच्छा चेत् स्मरणेनैव जायते ।
एवं बहुविधा योगा योगिनश्चेष्टासाधनम् ॥ ९२ ॥

योगे प्रवर्तमानस्य शरीरक्लेशसंभवाः ।
बुद्धिक्लेशश्च बहुधा जायते नात्र संशयः ॥ ९३ ॥

मोक्षं यदा प्रार्थयते तदा मां मनसा स्मरन् ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ ९४ ॥

ब्रह्मरन्ध्रेण विसृजेत् तीर्त्वा च विरजा नदीम् ।
मल्लोकं समनुप्राप्य मद्रूपं प्रतिपद्यते ॥ ९५ ॥

सूरिभिः सह मोदेत नित्यं मद्दर्शनाद् बुधः ।

* * *

# V

An encyclopadic source-book prepared by Pratāpa-simha-Sāhā, King of Nepal (Vikrama era 1832) was rightly described as an ocian, PURAŚCARYĀRṆAVA, (second edition published by Chowkhambhā Sanskrit Pratishthāna, Vārāṇasī in 1985). The extracts from this book given below relate to the fundamental aspects of the Āgama tradition.

(1)

**आगमशब्दार्थः ॥**

युगभेदेन मार्गभेदप्राधान्यमाह—

कृते श्रुत्युक्तमार्गः स्यात् त्रेताया स्मृतिभाषितः ।
द्वापरे वै पुराणोक्तः कलावागमसभवः ॥

(Rudra-yāmala)

प्रधान इति शेषः ।
आगमस्य विदाऽङ्गत्वमाह—

न वेदः प्रणवं त्यक्त्वा मन्त्रो वेदसमन्वितः ।
तस्माद्वेदपरो मन्त्रो वेदाङ्गश्चाऽऽगमः स्मृतः ॥

(Meru-tantra)

आगमशब्दार्थो,

आगतः शिववक्त्रेभ्यो गतश्च गिरिजामुखे ।
मग्नस्तस्या हृदम्भोजे तस्मादागम उच्यते ॥

(Rudra-yāmala)

आगमस्य वेदाङ्गत्वेऽपि वैदिकलौकिकयोर्विरोधमाह—

कौलिकं कुर्वतः कर्म वैदिकं नाऽभिधीयते ।
विरोधादुभय नष्ट तस्मादेकपथा चरेत् ॥

(Rudra-yāmala)

वामदक्षिणमार्गयोरपि विरोधमाह—

वाममार्गी यदा दक्षं प्रविशेत्तत्सुरैः स तु ।
विघ्न्यते पीड्यते चापि न सिद्धिमधिगच्छति ॥

दक्षमार्गी यदा वाम प्रविशेत्तत्सुरास्तथा ।
लोकद्वयाद्भ्रापयन्ति त ग्रसन्ति च वामिनम् ॥
तस्मात् स्वकुलमार्ग तु ज्ञात्वा कुर्यादुपासनाम् ।

(Meru-tantra)

**(2)**

**उपासनाभेदाः**

महाकालेन यत् प्रोक्तं यन्महामायया श्रुतम् ।
रहस्याऽतिरहस्यं तत् सर्वमन्त्रेषु गोपितम् ॥

आम्नायानां रहस्यं तदाह्निकं प्रोच्यतेऽधुना ।
शृण्वन्तु सर्वे भो देवाः साधकाना प्रसिद्धिदम् ॥

तत्र नित्यं त्रिधा प्रोक्तं गुणत्रयविभेदतः ।
अधिकारिविभेदेन तदपि त्रिविधं भवेत् ॥

शुद्धं मिश्रं च गलितं तत्तथैव फलप्रदम् ।
शुद्धं सम्पूर्णफलदं मिश्रं किंचित्फलप्रदम् ॥

अकृते प्रत्यवायो न गलिते सत्फल न च ।
अहङ्कारविहीनं यन्मानस ज्ञानपूर्वकम् ॥

स्वस्थचित्तेन यतिना कृतं तच्छुद्धमुच्यते ।
तादृश चेद् गृहस्थेन निर्द्रव्येणाऽथ वा कृतम् ॥

रुग्णेन पथिकेनापि कारागृहगतेन वा ।
भक्तितो वाऽपि तन्मिश्र बाह्यपूजाऽधिकारतः ॥

शीतादिभीत्यादाविष्टसंक्षयादल्पकार्य्यतः ।
स्त्र्यादेर्नियोगाद् गलितो गृहीतो मानस मतम् ॥

बाह्यपूजादिकं यच्च एकान्ते नियमेन च ।
भक्त्या कृत गृहस्थेन तच्छुद्धं राजस मतम् ॥

पूजार्थं यद्याचयित्वा श्रद्धाभक्ती विहाय वा ।
लोकभीत्या देवभीत्या यत् तद्राजसमिश्रितम् ॥

प्रतारणार्थं लोकानां याचितं देवनामतः ।
द्रव्यं कृतं तद्द्वेषेण गलितं तत्तु राजसम् ॥

वाममार्ग समाश्रित्य कौलं धर्म विचार्य च ।
अन्यधर्मस्य चाऽद्वेषात् कृतं शुद्धं तु तामसम् ॥

कृतं यत् कामतः कर्म वैदिक पारलौकिकम् ।
वाममार्ग समाश्रित्य मिश्रितं तत्तु तामसम् ॥

जिह्वालोभेन यत् खानं पानं यत् कामतो रतम् ।
अथ वा मारणाद्यर्थ गलित तत्तु तामसम् ॥

शुद्धसत्त्वेन मोक्षः स्यात् स्वर्गः स्यान्मिश्रसत्त्वतः ।
सिद्धिर्गलितसत्त्वात् स्यादैहिकी च मनुष्यता ॥

स्वर्गः स्याद्राजसाच्छुद्धात् कामः स्यान्मिश्रराजसात् ।
गलिताद्राजसात् तिर्यग्योनावपि सुख भवेत् ॥

सात्त्विकात्तामसाद्देवयोनित्व प्राप्नुयान्नरः ।
मिश्रतामसतो दुःखी नारकी चाऽन्ततामसात् ॥

कर्म पञ्चविध प्रोक्तं पञ्चधा मुक्तिदायकम् ।
प्रसर्पणमुपादानमिज्याऽध्यायस्तथा भुवि ॥

समार्जनोपलेपादिसस्कारा देवमन्दिरे ।
भक्त्याऽर्चनं सर्प्पणं स्याद्देवसालोक्यकारकम् ॥

पूजासाधनसामग्र्या मेलनं भक्तसेवनम् ।
तत् प्रीतिः स्यादुपादानं देवतारूपदायकम् ॥

पीठपूजनपूर्व यत् षोडशाद्युपचारकैः ।
मूर्त्तेर्यन्त्रेऽथ वा पूजा सेज्या सामीप्यकारिका ॥

तच्छास्त्राऽध्ययन सम्यक् कृत्वा मन्त्राऽर्थभावनम् ।
कृत्वा जपः स्यात् स्वाध्यायो देवसायुज्यकारकः ॥

गुरुदेवात्मकालाना सम्यगैक्यविभावनम् ।
संयोगो देहलिङ्गस्य नाशकः कालयोगकृत् ॥

(Meru-tantra)

उपासना त्रिधा प्रोक्ता श्रेष्ठा तत्र तु सात्त्विकी ।
तस्यां च मानसौ पूजाजपौ मुख्यतमौ स्मृतौ ॥

राजसो दक्षिणो मार्गः प्रतिमायां प्रपूजनम् ।
बाह्योपचारैः पुष्पाद्यैस्तदाद्याना विशिष्यते ॥

तामसोपासनं प्रोक्त पीठादौ बलिदानतः ।
वाममार्गेण तच्चाद्यं वर्ण हित्वा प्रशस्यते ॥

एषा व्यवस्था संप्रोक्ता वामदक्षिणयोः परा ।
उपासना द्विधा प्रोक्ता सकामाऽकामविश्रुता ॥

मोक्षबीज तु निष्कामा सकामा भवबीजकम् ।

उपासनाया च गुरूपदेशं विनाऽनधिकारित्वमाह—

द्विजानामनुपनीतां स्वकर्माऽध्ययनादिषु ।
तथा चाऽदीक्षितानां च मन्त्रदेवाऽर्चनादिषु ॥

नाधिकारोऽस्त्यतः कुर्य्यादात्मान मन्त्रसंस्कृतम् ।

(Meru-tantra)

जपो देवार्चनविधिः कार्य्यो दीक्षाऽन्वितैर्नरैः ।
यदृच्छया श्रुतं मन्त्रं छद्मनाऽथ बलेन च ।
पत्रे स्थित तु गाथावत् प्रजप्तमपि निष्फलम् ॥

(Mantra-muktāvalī)

अदीक्षिता ये कुर्वन्ति जपपूजादिकाः क्रियाः ।
न भवेत्तु फलं तेषां शिलायामुप्तबीजवत् ॥

(Yoginī-tantra)

न शास्त्रमालोक्य वदेन्नाऽऽचरेन्न जपेदपि ।
न पश्येन्नोपदिश्याच्च न कुर्य्यान्नैव साधयेत् ॥

गुरूपदेशतो लब्धे जपान्यासाऽर्चनादिके ।
पश्चात्तत्साधयेत्सर्व सदा तद्भवभावितः ॥

(Mahākāla-samhitā)

## (3)

## दीक्षाविचारः

यस्य दीक्षा शिवे नास्ति जीवनान्तं च जन्मिनः ।
स जातु नोत्तरेद्देवि निरयाऽम्बुनिधेः क्वचित् ॥

दीक्षाहीनस्य देवेशि पशोः कुत्सितजन्मनः ।
पापौघोऽन्तिकमायाति पुण्य दूरं पलायते ॥

तस्माद्यत्नेन दीक्षैषा ग्राह्यो कृतिभिरुत्तमा ।

(Rudra-yāmala)

अथ दीक्षाविहीनो यो वर्त्तते भुवि पापभुक् ।
मोहाऽन्धकारे नरके गर्ते पतति दु खितः ॥

अनीश्वरस्य मर्त्यस्य नास्ति त्राता यथा भुवि ।
तथा दीक्षाविहीनस्य नेह स्वामी परत्र च ॥

(Dattātraya-yāmala)

उपचारसहस्रैस्तु योजितां भक्तिसयुताम् ।
अदीक्षिताऽर्चना देवा न गृह्णन्ति कदाचन ॥
कर्माऽखिलं वृथा यस्मात् तस्मात् पशुरदीक्षितः ।

(Āgama-Kalpa-druma)

अदीक्षितानां मर्त्याना शृणु देवि महेश्वरि ।
अन्नं विष्ठासमं तस्य जलं मूत्रसम स्मृतम् ॥

तत्कृतं तस्य वा श्राद्धं सर्व संयात्यधोगतिम् ।

(Matsya-sūkta)

दीक्षामाहात्म्यमाह—

उपपातकलक्षाणि महापातककोटिकाः ।
क्षणाद्दहति देवेशि दीक्षा हि विधिना कृता ॥

(Kulārṇava-tantra)

दीक्षितो ब्राह्मणो याति ब्रह्मलोकं सुधामयम् ।
ऐन्द्रं लोकं क्षत्रियोऽपि प्राजापत्यं विशस्तथा ॥

याति गन्धर्वनगरं शूद्रो दीक्षाप्रसादतः ।
दीक्षां विना न मोक्षः स्यात् प्राणिनां शिवशासनात् ॥

सा च न स्याद्विनाऽऽचार्यमित्याचार्य्यपरम्परा ।

(Rudra-yāmala)

सर्वसिद्धिकरी दीक्षा सर्वसंपत्प्रदायिनी ।
प्रतिमास्वरवर्णानि कान्तिपुष्टिधनानि च ॥

मोहनस्तम्भनाऽऽकृष्टिमारणोच्चाटनानि च ।
वशीकार च कवितां बुद्धि वै धारणायुताम् ॥

तारण च समुद्रस्य वह्नेः शैत्यं रणे जयम् ।
विपिने चाऽभयं चैव शोकदुःखाऽपहं तथा ॥

धर्माऽर्थकाममोक्षांश्च ददात्येषा न संशयः ।

(Vaiśampāyana-samhitā)

दीक्षाशब्दार्थ उक्तो—

दिव्यज्ञानं यतो दद्यात् कुर्य्यात् पापस्य संक्षयम् ।
तेन दीक्षेति लोकेऽस्मिन् कीर्तिता मन्त्रपारगैः ॥

(Rudra-yāmala)

दीयते ज्ञानविज्ञानं क्षीयन्ते पापराशयः ।
तेन दीक्षेति हि प्रोक्ता प्राप्ता चेत् सद्गुरोर्मुखात् ॥

असद्गुरुः स्वयं नष्टः कथं तारयते परम् ।

(Meru-tantra)

गुरोर्मुखान्महाविद्यां गृह्णीयात् पापनाशिनीम् ।
तस्माद्यत्नाद् गुरुं कृत्वा मन्त्रसाधनमाचरेत् ॥

(Āgama-sāra)

## (4)

## भूपरीक्षा

ततो भूमि परीक्षेत वास्तुज्ञानविशारदः ।
शल्यादिशोधनं कुर्यात् तुषाङ्गारादि दूरयेत् ॥

एतस्याकरणे मन्त्री न किंचित् फलमाप्नुयात् ।

(Gautamīya-tantra)

खन्यमाने जलं यावत् शल्यदोषो विनश्यति ।
दूरनीचस्थितं वारि खनितुं नैव शक्यते ॥

पञ्चहस्तं प्रखातव्यं शल्यदोषोपशान्तये ।
शल्योद्धारं ततः कृत्वा पूरयेत् सुसमं यथा ॥

वास्तुयागं ततः कुर्यात् सर्वविघ्नोपशान्तये ।

(Mahā-Kāpiñjala-samhitā)

## (5)

### वास्तुयागः

गृहादिकरणे यत्र नार्चितो वास्तुदैवतः ।
तत्र शून्य भवेत् सर्वं रक्षोविघ्नादिभिर्हतम् ॥
तस्माद्वास्त्वर्चनं सम्यक् कार्य सम्पदभीप्सुभिः ।

भूमेः परिग्रहे पूर्व शिलानां स्थापने तथा ।
जलाधारगृहार्थ च यतेद्वास्तु विशेषतः ॥

अपरेष्वपि कार्येषु यागहोमादिकेषु च ।
वास्तुमण्डलकं कुर्यात् सूत्रयित्वा सम गुरुः ॥

(Pāñcha-rātra-samhitā)

वास्तुनामा पुरा कश्चिदसुरोऽभून्महाबलः ।
त्रैलोक्यं निर्जितं तेन त्रिपञ्चाशच्च देवताः ॥

ये रणे संमुखे यातास्तेन ते विनिपीडिताः ।
पुनःपुनर्जिता युद्धे स एवासीत् प्रजापतिः ॥

दिव्यवर्षसहस्रान्ते देवाः शरणमागताः ।
विष्णोर्मम च पार्वत्या दैत्येन्द्रेणापि तच्छ्रुतम् ॥

योद्धुकामः सोऽभ्यधावन्नारदेन प्रचोदितः ।
कृतं युद्धं तेन सार्धमस्माभिर्वर्षपञ्चकम् ॥

ततो दैत्यो मदोत्सिक्तो विष्णुमायाविमोहितः ।
उवाच वचनं तुष्टो व्रियतां व्रियतामिति ॥

नेन्द्रेण न कुबेरेण मम तोषकरं कृतम् ।
ससैन्येनापि तद्युद्ध त्वया तु जटिलेन हि ॥

कृतं विष्णुसहायेन पार्वत्यर्धाङ्गधारिणा ।
तेनाहं तुष्टिमापन्नस्त्रैलोक्यपरमेश्वरः ॥

अदेयं नास्ति मे किंचिद्याचयन्तु त्रयोऽपि च ।
इत्याकर्ण्य वचस्तस्य शिवयोर्भ्रूप्रचोदितः ॥

हरिः प्राह महाधन्य दैत्येन्द्र त्वत्समोऽस्ति कः ।
सत्यं त्रिवार कुरुषे तदा याच्यो मया वरः ॥

शिवेनापि च पार्वत्या एक एवापरो न हि ।
त्रिरुवाच ततो दैत्यस्तदा विष्णुर्व्यजिज्ञपत् ॥

यथा ते त्वरित मृत्युः स उपायः प्रदृश्यताम् ।
विष्णोश्छलमिति ज्ञात्वा दैत्येन्द्रः समभाषत ।
अवश्यमेव गन्तव्यं सर्वैः कालमुखे हरे ।
तथा च स्वप्रतिज्ञार्थ यो गच्छति स जीवति ॥

परं त्वेक न मे वंशो यैश्च मत्सेवनं कृतम् ।
तस्य मार्ग दर्शयित्वा देहोऽय विनिपात्यताम् ॥

काले तस्मिंश्च भो देवा वागुवाचाशरीरिणी ।
दैत्येन्द्र कुरु मा शोकं भूमेर्जन्म तवाभवत् ॥

तत्रैव त्वं लयं याहि त्वत्तोषार्थ वरं श्रृणु ।
ये वर्णाः स्वस्य भोगार्थ करिष्यन्ति नवं गृहम् ॥

तत्र त्वदुत्सवमृते नानादुःखैरुपद्रुताः ।
कालवर्ण्यादिका दास्यो विनायकमुखाश्च ते ॥

सेवकाः पीडयिष्यन्ति इत्याज्ञा पारमेश्वरी ।
इत्याकर्ण्य वचः सोऽपि गर्त्तं गत्वा महाविलम् ॥

प्रविवेश ततो देवैर्मृत्पाषाणैः प्रपूरितम् ।
तेन ये निर्जिता देवाः पुनरुद्रमशङ्कया ॥

तस्यार्थ च त्रिपञ्चाशन्निवासं चक्रुरुद्यताः ।
तस्मादवश्यं ते पूज्या गृहवाससुखेच्छया ॥

(Meru-tantra)

शृण्वन्तु तद्विधि देवा वामदक्षिणमार्गतः ।
पाषाणे प्रतिमायां वा वास्तोष्पते प्रतिज्ञाति ॥

इति वैदिकमन्त्रेण तस्यावाहनपूजनम् ।
नाममत्रेण चान्येषां पूजां कृत्वा प्रपूरयेत् ॥

नैऋत्यकोणे गेहस्य चतुरस्राकृति शुभाम् ।
कृत्वा समतलां भूमि वितस्त्युच्चां च वेदिकाम् ॥

विस्तारायामतो हस्तमात्रा तत्र लिखेद्बुधः ।

(Meru-tantra)

गृहप्रासादकूपानां मण्डपस्य जलस्य च ।
वास्तुमण्डलक कार्यमष्टहस्तं तु नापरम् ॥

भद्रभूमि प्रशोध्येत दशादण्ड समालिखेत् ।
अधोऽधस्तिर्यगादौ च तेनैकाशीतिकोष्ठकम् ॥

(Mahā-Kāpiñjala-samhitā)

एकाशीतिपदं चक्रं वैदिकास्तत्र दैवताः ।
मध्यकोष्ठेषु नवसु त्वादौ ब्रह्माणमर्च्चयेत् ॥

आपवत्सं तदीशाने प्रागर्यम्णं त्रिकोष्ठके ।
आग्नेये सवितारं च विवस्वन्तमवाक् त्रिषु ॥

इन्द्रं नैऋतदिग्भागे मित्रं पश्चिमगं त्रिषु ।
वायव्ये राजयक्ष्माणं सुमेरुं चोत्तरत्रये ॥

वेदकोष्ठेषु चैशान्यामीशाकोणाच्च देवताः ।
शिखी पर्जन्य आपश्च दितिः प्राक्कोष्ठयोर्द्वयोः ॥

क्रमादेते पञ्च देवा ज्ञातव्याः सव्यमार्गतः ।
जयन्तेऽन्द्रौ सूर्यसत्यौ भृश आग्नेयकोणके ॥

अन्तरिक्षं तथा वातः पूषा सावित्र एव च ।
चतुष्क ईशतो देवास्ततो दक्षिणपञ्चके ॥

युग्मक्रमाच्च वितथो बृहत्क्षेत्रयमौ तथा ।
ततः पश्चाद् द्विके पञ्च सुग्रीवः पुष्पदन्तकः ॥

वरुणासुरशोषाश्च वायव्ये ईशतस्त्वहिः ।
रुद्रश्च पापयक्ष्मा च रोगश्चोत्तरपञ्चसु ॥

मुख्यो भल्लाटसोमौ च भुजगश्चादितिस्तथा ।
देवा एते पञ्चचत्वारिंशादर्च्यास्तु भक्तितः ।
इदमेकाशीतिपदं वैदिकं वास्तुमण्डलम् ।

(Meru-tantra)

अथ तान्त्रिकमार्गे तु चतुःषष्टिपदे तथा ।
कोणयोः सूत्रयुगलं मध्ये ब्रह्माणमर्चयेत् ॥

विप्राशिषा वेदघोषैर्मङ्गलाचारपूर्वकैः ।
वास्तोर्मण्डलक कुर्याद्यथाशोभं यथाविधि ॥

## एकाशीतिपदं वास्तुचक्रम् ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| शिखी | पर्जन्यः | जयन्तः | इन्द्र | सूर्यः | सत्यः | भृशः | अन्त रिक्षः | वातः |
| दितिः | आप· | जयन्तः | इन्द्रः | सूर्यः | सत्य· | भृशः | सावित्रः | पूषा |
| अदितिः | अदितिः | आप वत्सः | अर्यमा | अर्यमा | अर्यमा | सविता | वितथः | वितथः |
| भुजगः | भुजगः | सुमेरु· | ब्रह्मा | ब्रह्मा | ब्रह्मा | विव-स्वान् | बृह-त्क्षेत्रः | बृह-त्क्षेत्रः |
| सोमः | सोमः | सुमेरुः | ब्रह्मा | ब्रह्मा | ब्रह्मा | विव-स्वान् | यमः | यमः |
| भल्लाटः | भल्लाटः | सुमेरुः | ब्रह्मा | ब्रह्मा | ब्रह्मा | विव-स्वान् | गन्धर्वः | गन्धर्वः |
| मुख्यः | मुख्यः | राज-यक्ष्मा | मित्रः | मित्रः | मित्रः | इन्द्रः | भृङ्ग-राजः | भृङ्ग-राजः |
| अहिः | रुद्रः | शोषः | असुरः | वरुणः | पुष्प-दन्तः | सुग्रीवः | जयः | मृगः |
| रोगः | पाप यक्ष्मा | शोषः | असुरः | वरुणः | पुष्प-दन्तः | सुग्रीवः | दौवा-रिकः | पिता |

पूर्वापरायतं सूत्रं विन्यसेद्धस्तमानतः ।
तन्मध्यं किचिदालम्ब्य मत्स्यौ द्वौ परितो लिखेत् ॥

तयोर्मध्ये स्थितं सूत्रं विन्यसेद्दक्षिणोत्तरम् ।
द्वाभ्यां द्वाभ्यां तथाऽग्राभ्यां कोणेषु मकरॉल्लिखेत् ॥

मत्स्यमध्ये स्थिताग्राणि तत्र सूत्राणि पातयेत् ।
चतुरस्त्रं भवेत् तत्र चतुष्कोष्ठसमन्वितम् ।।

तत् पुनर्विभजेन्मन्त्री चतुःषष्टिपदं यथा ।
ईशानाद्राक्षसं यावद्यावदग्नेः प्रभञ्जनम् ।।

एवं सूत्रद्वयं दद्यात् कर्णसूत्रं समाहितः ।
ब्रह्माणं पूजयेदादौ मध्यकोष्ठचतुष्टये ।।

दिक्चतुष्के तु पूर्वादि यजेदार्यमनन्तरम् ।
विवस्वन्त ततो मित्र महीधरमनन्तरम् ।।

कोणार्धकोष्ठद्वन्द्वेषु वह्न्यादि परितः पुनः ।
सावित्रं सवितारं च शाकमिन्द्रजयं पुनः ।
रुद्रं रुद्रजयं विद्वानापं चाऽथापवत्सकम् ।।

तत्कर्णसूत्रोभयतः कोष्ठद्वन्द्वेषु दैशिकः ।
शार्व गुहं चार्यमाण जृम्भकं पिलपिच्छिकाम् ।।

चरकी च विदारी च पूतनामर्चयेत् कमात् ।
पूजयेद्दिक्षु पूर्वादिसार्द्धाद्यन्तपदेष्विमान् ।।

अष्टावष्टविभागेन दैवतान् दैशिकोत्तमः ।
क्रमादीशानपर्जन्यजयन्ताः शक्रभास्करौ ।।

सत्यो वृषान्तरिक्षौ च दिशि प्राच्या व्यवस्थिताः ।
अग्निः पूषा च वितथो यमश्च गृहरक्षकः ।।

गन्धर्वो भृङ्गराजश्च मृगो दक्षिणदिग्गताः ।
निऋतिर्दौवारिकश्च सुग्रीव वरुणौ ततः ।।

पुष्पदन्ताऽसुरौ शोष रोगौ प्रत्यग्दिशि स्थिताः ।
वायुर्नागश्च मुख्यश्च सोमो भल्लाट एव च ।।

अर्गलाख्यो दित्यदिती कुवेरस्य दिशि स्थिताः ।
देवा एते त्रिपञ्चाशत् पूजनीयाः प्रयत्नतः ।

(Śāradā-tantra)

एकाशीतिपदं वास्तु गृहकर्मणि शस्यते ।
चतुःषष्ठिपदं वास्तु प्रासादेषु प्रशस्यते ॥

(Hayaśīrsha-samhitā)

## चतुःषष्ठिपदं वास्तुचक्रम् ।

शर्वः । पिलिपिच्छिका ।

गुहः । चरकी

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ईशानः अदितिः | पर्जन्यः | जयन्तः | शक्रः | भास्करः | सत्यः | वृषः | अन्तरिक्षः अग्निः |
| अदितिः | पर्जन्यः दितिः | जयन्तः | शक्रः | भास्करः | सत्यः | वृषः पूषा | पूषा |
| अर्गलः | अर्गलः | आपवत्सः आपः | आर्यमा | आर्यमा | सविता सावित्रः | वितथः | वितथः |
| भल्लाटः | भल्लाटः | महीधरः | ब्रह्मा | ब्रह्मा | विव-स्वान् | यमः | यमः |
| सोमः | सोमः | महीधरः | ब्रह्मा | ब्रह्मा | विव-स्वान् | गृह-रक्षकः | गृह-रक्षकः |
| मुख्यः | मुख्यः | रुद्रः रुद्रजयः | मित्रः | मित्रः | शक्रः इन्द्रजयः | गन्धर्वः | गन्धर्वः |
| नागः | नागः शोषः | असुरः | पुष्पदन्तः | वरुणः | सुग्रीवः | भृङ्गराजः दौवारिकः | भृङ्गराजः |
| वायुः रोगः | शोषः | असुरः | पुष्पदन्तः | वरुणः | सुग्रीवः | दौवारिकः | मृगः निर्ऋति. |

अर्यमा विदाई ।

जृम्भकः । पूतना ।

ब्रह्मस्थानं रक्तवर्णैर्दिशः पीतैर्विदिक् सितैः ।
ततो दिशास्तु हरितैर्विदिशाः कृष्णवर्णकैः ॥

अरुणः परिधिः कार्यः सुन्दरं मण्डलं भवेत् ।
मध्ये पदानां नवकं मार्जयित्वा प्रपूरयेत् ॥

सितेन रजसा भूयस्तद्दिक्षु चतसृष्वपि ।
षट्कं संमार्ज्य रजसा रक्तेन परिपूरयेत् ॥

तयोर्मध्ये चतुर्दिक्षु कोष्ठं द्वादशसंख्यकम् ।

मार्जयित्वा हरिद्वर्णैर्यथाशोभं प्रपूरयेत् ।
कोणे कोणेऽष्टयुग्मं पीतवर्णेन पूरयेत् ॥

शिष्टानि च पदान्यत्र यथाशोभं प्रकल्पयेत् ।
विचित्राणि ततो मध्ये ब्रह्माणं संप्रपूजयेत् ॥

(Meru-tantra)

उक्तानां सर्वदेवानां स्वरूपं च निगद्यते ।
अक्षमालां श्रुवं दक्षे वामे दण्डकमण्डलुम् ॥

दधानमष्टनयनं यजेन्मध्येऽम्बुजासनम् ।
सर्वे चतुर्भुजा देवा वास्तुदेहे व्यवस्थिताः ॥

कृताञ्जलिपुटा ऊर्द्ध्वं खड्गखेटकपाणयः ।
ब्रह्माणं संन्निरीक्षन्ते तद्वक्त्राभिमुखाश्च ते ॥

स्वस्वस्थानस्थिताश्चैव साधारणमुदाहृतम् ।
मरीचिः श्वेतवर्णः स्याद्विवस्वानभ्रवर्णकः ॥

शातकुम्भनिभो मित्रः कृष्णावक्त्रस्तु भूधरः ।
सविता नीलवर्णाभः सावित्रो धूम्रविग्रहः ॥

इन्दुश्चारुणवर्णाभः शुक्लश्चेन्द्रजयस्तथा ।
रुद्रः प्रवालसदृशः पीतो रुद्रजयस्तथा ॥

आपो गोक्षीरधवल आपवत्सो जपाद्युतिः ।
ईशानः क्षीरधवलः पर्जन्योऽञ्जनसंनिभः ॥

जयन्तोऽञ्जनसंकाशो महेन्द्रः श्यामलद्युतिः ।
आदित्यो रक्तवर्णः स्यात् सत्यकश्चित्रवर्णकः ॥

वृषो बन्धूकपुष्पाभः कुन्दाभश्चान्तरिक्षकः ।
उद्यद्दिनकराभोऽग्निः पूषा रत्नाभसन्निभः ॥

वितथश्चेन्द्रचापाभो विद्युद्वर्णो गृहरक्षकः ।
निरृतिः पावकाभश्च पीतो दौवारिकः स्मृतः ॥

सुग्रीवो नीलकण्ठाभश्चान्द्राभः पुष्पदन्तकः ।
वरुणः स्फटिकाभाङ्गो भृङ्गाभश्चासुरो मतः ॥

यमश्चाञ्जनसङ्काशो गन्धर्वः पद्मरागवत् ।
भृङ्गराजश्च भृङ्गाभो मृगो जीमूतसंनिभः ॥

शोषश्चोत्पलसंकाशो रोगश्चैवेन्द्रनीलवत् ।
वायुः कृष्णाभवर्णः स्यान्नागः शेषेन्दुसंनिभः ॥

मुख्यो मौक्तिकसंकाशो भल्लाटः श्वेतपद्मवत् ।
सोमः स्फटिकसंकाशोऽर्गलो रक्तोत्पलद्युतिः ॥

दितिः कुन्देन्दुधवला कपिला चादितिः स्मृता ।
चरकी शङ्खसदृशी विदारी पावकद्युतिः ॥

पूतना हिमसंकाशा मेघाभा पिलपिच्छिका ।
खड्गं च पानपात्रं च छुरिकां कर्त्तरी तथा ॥

दधाना भीमरूपास्ता राक्षस्यः परिकीर्त्तिताः ।
सितो रक्तश्च पीतश्च कृष्णाः स्कन्दादिका ग्रहाः ॥

वज्रं शक्ति च खड्गं च पाशं च विकृताननाः ।
दधाना भीषणाः प्रोक्ता ग्रहाः स्कन्दादिकाश्च ते ।

## बलिमन्त्राः द्रव्यभेदाः

पायसौदनलाजैश्च युक्तं धूपप्रसूनकैः ।
अन्नादिभिश्च संयुक्तं माषभक्तादिमण्डितम् ॥

गृहाणेम वलि ब्रह्मन् वास्तुदोषं प्रणाशय ।
गन्धादिशार्करारूपं पायसोपरिसंयुतम् ॥

आर्यकाख्य गृहाणेमं सर्वदोषं प्रणाशय ।
चन्दनाद्यर्चितं नाथ कर्पूरागुरुमण्डितम् ॥

विवस्वन् वै गृहाणेमं सर्वदोष प्रणाशय ।
सगुडं पायसं नाथ पुष्पादिसुसमन्वितम् ॥

गृहाणेमं विलिं हृद्यं मित्र शान्तिं प्रयच्छ मे ।
माषौदनं समांसं च गन्धादिक्षीरसंयुतम् ॥

गृहाणेमं महीभृत् त्वं सर्वदोषं प्रणाशय ।
एवं मध्ये तु संपूज्य ईशानादि वलि हरेत् ॥

(Kāpila-pāñcha-rātra)

## (6)

### मण्डपनिर्माणविधिः

यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम् ।
इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ॥

इति देवान् विसृज्य कुद्दालं पूजयेत् ।

भद्रं मुहूर्त्तमाश्रित्य खन्यतां वास्तुकोष्ठकम् ।
स्वर्णकुद्दालरूप त्वं भूमेः खननकर्मणि ।
विश्वकर्मायुधो नित्यं नमस्ते चास्त्रमूर्त्तये ॥

इति स्वर्णकुद्दालं प्रपूज्य खनितृपुरुषं विश्वकर्मधिया पूजयेत् ।

द्विभुजः पीतदेहस्तु जटाधारी कजासनः ।
विश्वकर्मा सदा गौरो ज्ञानमुद्राक्षसूत्रभृत् ॥

विश्वकर्मन् जगद्व्यापिन् संसारसृष्टिकारक ।
अत्र कुद्दालहस्तस्त्वं विश्वकर्मन्नमोऽस्तु ते ॥

एकाशीतिकोष्ठभेदे वास्तौ विश्वात्मकर्मक ।
कुद्दालं गृह्यतामत्र खननं कुरु साम्प्रतम् ॥

इति तद्धस्ते कुद्दालं दक्षिणां च दद्यात् । ततः पृथिवीं प्रार्थयेत् ।

कुद्दालदारितैरत्र कीटकोटिशतैरपि ॥
क्षम्यतां पृथिवीदेवि विष्णुस्थापनहेतवे ।

इति पृथ्वीं संप्रार्थ्य विश्वकर्मात्मकखनितृपुरुषो वास्तुपुरुषस्य कक्षान्तरे खननं कुर्यात् ।

शुभाशुभानि वास्तूनां क्रमेणैव वदाम्यहम् ।
कक्षान्तरे च नित्यं च सर्वत्र भद्रमादिशेत् ॥

शीर्षे चैव भवेन्मृत्युः कण्ठे वै दुःखभागिता ।
हस्ते चौरभयं विद्यादुरसा पशुनाशनम् ॥

जानौ विदेशगमनं पादाभ्यां च निरर्थकम् ।
वामदक्षिणमित्येवं वास्तुक्षेत्रमुदीरितम् ॥

निपुणः कारयेन्मत्री कल्याणं पूर्णताकृतम् ।
समाहितमना भूत्वा खनयेद्वास्तुकक्षके ॥

(Obscure source)

कृत्वा भूमिं समां तत्र वृत्तं हस्तमितं समम् ।
द्वादशाङ्गुलमानोच्चं शङ्कुं खादिरनिर्मितम् ॥

अलाभे यज्ञवार्क्ष वा तत्र संस्थापयेत् सुधीः ।
तच्छाया संस्पृशेद्यत्र तन्मध्ये मध्यमं स्मृतम् ॥

तिर्यक् प्रसारयेत् सूत्रं मध्ये याम्योत्तरे स्मृते ।
कोणाः स्युरन्ये चत्वारश्चतुःसूत्रप्रसारणात् ॥

एवं मानपरिज्ञानं समाख्यातं यथा स्फुटम् ।
ज्ञात्वैवं मण्डपादीनि कुर्यात् सम्यग् विचक्षणः ॥

(Kriyā-sāra)

विषुवे तु गते सूर्ये शङ्कुमानं समाचरेत् ।
खादिरं विन्यसेच्छङ्कुं द्वादशाङ्गुलविस्तृतम् ॥

निश्चलीकृत्य हन्तव्यं गृहीत्वा लोहमुद्गरम् ।
अष्टधा च स्वयं हन्यात् प्रशस्तं क्रमतो लघु ॥

हन्यमाने यदा शङ्कौ हस्तात् पतति मुद्गरः ।
तदा ताडयितुः शोको जायते दुस्तरो महान् ॥

मौञ्जं कार्पासकौशेयं प्राणिवालजमेव च ।
चतुर्यवपरीणाहं सूत्रं शङ्कौ तु वेष्टयेत् ॥

वेष्ट्यमानं यदा सूत्रं शङ्कुं मुञ्चति तत्क्षणम् ।
पुत्रस्य मरणं विद्याच्छिन्ने वै स्वविनाशनम् ॥

तत्रापि नारसिहेन होमेनाशुभनाशनम्— इति ।

(Kapilā-pāñcharātra)

नक्षत्रराशिवाराणामनुकूले शुभेऽहनि ।
ततो भूमितले शुद्धे तुषाङ्गारादिवर्जिते ॥

पुण्याहं वाचयित्वा तु मण्डपं रचयेच्छुभम् ।
पञ्चभिः सप्तभिर्हस्तैर्नवभिर्वामिनां वरम् ॥

(Śāradā-tantra)

स्वल्पो द्वादशहस्तोऽयं द्विद्विवृद्ध्या ततः क्रमात् ।

(Pratishṭhā-sāra-sangraha)

राज्ञां होमाभिषेकादिप्रयोगार्थं तु मण्डपम् ।
विदध्यान्नवहस्तेन विस्तारायामसंयुतम् ॥

(Tantra-rāja)

स्थूलादर्काङ्गुलोच्छ्रायं मण्डपस्थलमीरितम् ।

(Siddhānta-śekhara)

[illegible]च्छ्रायो हस्तमानं स्यात् सुसमं च सुशोभनम् ॥

(Kāpila-pāñcharātra)

षोडशास्तम्भसंयुक्तं चत्वारस्तेषु मध्यगाः ।
अष्ट हस्ताः समुच्छ्रायाः संस्थाप्या द्वादशाभितः ॥

पञ्चहस्तप्रमाणास्ते निश्छिद्रा ऋजवः शुभाः ।
तत्पञ्चमाशं निखनेन्मेदिन्यां तन्त्रवित्तमः ॥

(Śāradā-tantra)

पञ्चमांशं न्यसेद्भूमौ सर्वसाधारणो विधिः ।

(Vāstu-śāstra)

मध्ये स्तम्भचतुष्कं स्यात् तन्मध्ये वेदिका मता ।
वेदीकोणेषु विन्यस्य स्तम्भान् वेदस्वरूपकान् ॥

(Siddhānta-śekhara)

सारदारुभवान् स्तम्भान् दृढान् कुर्यादृजून् समान् ।

याज्ञीयवृक्षो वेणुर्वा क्रमुकः स्तम्भकर्मणि ।
अन्ये विशुद्धवृक्षा वा भवेयुर्नापभूरुहः ॥

गृहशल्यः स्वयं शुष्कः कुटिलश्च पुरातनः ।
असौम्यभूमिजनितः संत्याज्यः स्तम्भकर्मणि ॥

(Kriyā-sāra)

दिक्षु द्वाराणि चत्वारि विदध्यात् पञ्चमांशतः ।

कनीयसि स्याद् द्विकरं चतुरङ्गुलवृद्धितः ।
मध्यमोत्तमयोर्द्वारमिति पश्येन्मनोहरम् ॥

(Mantra-muktāvalī)

प्लक्षोदुम्बरिकाश्वत्थवटजास्तोरणाः क्रमात् ।
पूर्वादितो विधातव्या यद्वाऽऽद्यन्तविपर्ययः ॥

अलाभादेकमेवैषां सर्वाशासु निवेशयेत् ।

(Soma-śambhu-paddhati)

एकमेषामलाभे स्यात् तदभावे शमीद्रुमः ।
जम्बूः खदिरसारश्च तालो वा तोरणे स्मृताः ॥

(Siddhānta-śekhara)

देवास्तोरणरूपेण संस्थिता यज्ञमण्डपे ।
विघ्नविध्वंसनार्थं च रक्षार्थं त्वध्वरस्य च ॥

न्यसेन्न्यग्रोधमैन्द्र्यां तु याम्यां चोदुम्बरं तथा ।
वारुण्यां पिप्पलं चैव कौबेर्यां प्लक्षकं न्यसेत् ॥

सुशोभनं तु पूर्वस्यामृग्वेदादिसुमन्त्रितम् ।
इषे त्वेति च मन्त्रेण सुभद्राख्यं तु दक्षिणे ॥

सुकर्माख्यं तु वारुण्यां सामवेदादिकेन तु ।
शन्नो देवीति मन्त्रेण सुहोत्रं तूत्तरे न्यसेत् ॥

(Kāpila-pāñcharātra)

द्वारेण तोरणानि स्युः क्रमात् क्षीरमहीरुहाम् ।
स्तम्भोच्छ्रायः स्मृतस्तेषां सप्तहस्तैः पृथक् पृथक् ॥

दशाङ्गुलप्रमाणेन तत्परीणाह ईरितः ।
तिर्यक्फलकमानं स्यात् स्तम्भमानार्धमानतः ॥

शूलानि कल्पयेन्मध्ये तोरणे हस्तमानतः ।

(Śāradā-tantra)

पञ्चहस्तप्रमाणास्ते विस्तारेण द्विहस्तकाः ।
षडङ्गुलादिवृद्ध्या तु सप्तहस्तास्तथोत्तमे ॥

(Vāstu-śāstra)

वैष्णवे द्वादशांशेन शङ्खचक्रगदाम्बुजान् ।
प्रागादिक्रमयोगेन न्यसेत् सौरोऽपि वैष्णवः ॥

(Meru-tantra)

दिक्षु ध्वजान्निबध्नीयाल्लोकपालसमप्रभाम् ।
वितानदर्भमालाद्यैरलंकुर्वीत मण्डपम् ॥

पीतरक्तादिवर्णाश्च पञ्चहस्ता ध्वजा स्मृताः ।
द्विपञ्चहस्तैर्दण्डैस्ते वंशजैः संयुता समाः ॥

(Pratishṭhā-sāra)

पञ्चहस्ता ध्वजाः कार्या वैकल्पे तु द्विहस्तकाः ।
दण्डश्च दशहस्तश्च दशदिक्षु च तान् न्यसेत् ॥

दर्पणैश्चामरैर्घण्टैस्तम्भान् वस्त्रैर्विभूषयेत् ।
कलशैर्घण्टिकाभिश्च साधारैः कर्करैस्तथा ॥

तत्र प्रतितोरणमेकैकः कलशः स्थाप्यः । प्रतिद्वारपार्श्वं द्वौ द्वौ । प्रतिकोणं चैकैकः ।

(Hayaśīrsha-saṁhitā)

गन्धपुष्पाम्बरोपेतान् कुम्भाँस्तेषु विनिःक्षिपेत् ।
ध्रुवं धरां वाक्पतिं च विघ्नेशं तेषु पूजयेत् ॥

मण्डपस्य तु कोणस्थकलशेषु क्रमादमी ।
अमृतो दुर्जयश्चैव सिद्धार्थो मङ्गलस्तथा ।
पूजाद्वारस्थकुम्भेषु शक्राद्यास्तन्मनूत्तमैः ॥

मण्डपे कलशौ द्वौ द्वौ द्वारे द्वारे निवेशयेत् ।
गालितोदकसंपूर्णावाम्रपल्लवशोभितौ ॥

तत्त्रिभागमिते क्षेत्रेऽरत्निमात्रसमुच्छ्रिताम् ।
चतुरस्रां ततो वेदीं मण्डलाय प्रकल्पयेत् ॥

(Śāradā-tantra)

चतुर्द्वारयुक्तं ततस्तस्य मध्ये बुधस्तत्त्रिभागैकभागेन वेदीम् ।
अरत्निप्रमाणोन्नतां दर्पणान्तर्निभायां मनोहारिणी चापि कुर्यात् ॥

(Tripurā-sāra-samuchhaya)

तैश्चतुर्भिर्भवेन्मुष्टिर्वितस्तिस्तैस्त्रिभिर्गुणैः ।
अरत्निस्तद्द्वयेन स्याद्धस्तस्तद्वदतः शिवे ॥

त्रिभागं मण्डपं कृत्वा मध्यभागे तु वेदिका ।
हस्तमानं तदुत्सेधश्चतुरस्रं समं यथा ॥

(Kriyā-sāra)

त्रिधारं वामदीक्षायां शङ्खाभं वैष्णवे मखे ।
चतुरस्रा चतुष्कोणा वेदी सर्वफलप्रदा ॥

मण्डपोपरि बध्नीयादतिश्वेतं वितानकम् ।
अलंकुर्यात् पुष्पमालादिभिरेनं तु वेष्टयेत् ॥

आम्राश्वत्थदलोत्पन्नयुक्तया दीर्घमालया ।
स्तम्भान् दुकूलैः संवेष्ट्य मध्ये कुर्याच्च वेदिकाम् ॥

इष्टिकाभिरपक्वाभिर्हस्तविस्तृतपिण्डिकाम् ।
मण्डपायामरुद्रांशनवसप्तेषुरामकैः ॥

अंशैः समुन्नतां वाऽपि तारतम्य विलोक्य च ।
सामग्र्यादेः समावेशो यथा स्यादिति मण्डप· ॥

(Meru-tantra)

प्राक्प्रोक्ते मण्डपे विद्वान् वेदिकाया बहिस्त्रिधा ।
क्षेत्रं विभज्य मध्यांशे पूर्वादि परिकल्पयेत् ॥

अष्टास्वाशासु कुण्डानि रम्याकाराण्यनुक्रमात् ।
चतुरस्त्रं योनिमर्धचन्द्रं त्र्यस्त्रं च वर्त्तुलम् ॥

षडस्त्रं पङ्कजाकारमष्टास्त्र तानि नामतः ।
आचार्यकुण्ड मध्ये स्याद्गौरीपतिमहेन्द्रयोः ॥

(Śāradā–tantra)

वेदास्त्रं योनिमर्धोडुपनिभमनलास्त्र सुवृत्तं षडस्त्रं
पद्माकार गजास्त्र हरिहरहरिदारभ्य तस्यां विदध्यात् ।

मध्ये वृत्तं च गौरीपतिसुरपदिशोः पण्डिताः केचिदूचु-
र्वायव्ये पञ्चकोणं दिशि मदनरिपोः सप्तकोणं च कुण्डम् ॥

(Tripurā-sāra)

प्राक् सूत्रं प्रथमं निधाय विदधीतार्धेन तस्याङ्कितं
मध्ये मत्स्ययुगं दिशोरमलधीः कीनाशवित्तेशयोः ।
ताभ्यां सूत्रमपि प्रसार्य चतुरः कोणांस्ततो लाञ्छयेत्
क्षेत्रं स्याच्चतुरस्त्रमत्र रचयेदन्यानि कुण्डान्यपि ॥

क्षेत्रे क्षित्वा बहिरिह च पुरो भूतभागांशमेकं
कोणार्धार्धं सुनिशितमतिर्भ्रामयेत् संप्रगृह्य ।
यावत्कोणं परमपि तथा सूत्रयुग्मस्य पातं
मध्ये कुर्याद्भवति तदिदं मन्मथावासकुण्डम् ॥

परित्यज्य भागद्वयं पङ्क्तिभागी-
कृतेऽत्रोपरिष्टादधस्ताच्च विद्वान् ।
परिभ्रामयेत् तेन मानेन सम्यग्-
भवेदर्धचन्द्राह्वयं कुण्डमेतत् ॥

शार्वरीशार्धभागीकृतक्षेत्रतः
पार्श्वयोर्न्यस्य भागद्वयं पण्डितः ।
तेन मानेन सूत्रद्वयं विन्यसेत्
कुण्डमेतद्भवेदुद्रनेत्रास्रकम् ॥

दिग्गजाभ्यधिकपङ्क्तिभागतः क्षेत्रतो निशितधीर्बहिर्न्यसेत् ।
भागमेककमनेन सर्वतो भ्रामयेद्भवति वृत्तमुत्तमम् ॥

भूयांसेंशद्वयमिह बहिः पार्श्वयोर्न्यस्य मध्यात्
क्षेत्राभ्यासे तु विमलमतिस्तेन मानेन कृत्वा ।
पार्श्वद्वन्द्वे झषयुगयुगं सूत्रषट्कस्य पातं
कुर्यात् कुण्डं भवति तदिदं तर्ककोणं मनोज्ञम् ॥

दशांशेऽत्र विन्यस्य बाह्येशमेकं
परिभ्राम्य तेनैव वृत्तं दलानाम् ।
बहिर्मध्यमे कर्णिकां चापि कुर्याद्-
भवेदष्टपत्रं बुधः पद्मकुण्डम् ॥

क्षेत्रे क्षिप्त्वाऽत्र बाह्ये दिशि दिशि मिहिरद्वन्द्वकांशेंशमेकं
कृत्वा नेत्राब्धिकोणं पुनरपि मतिमान् कोणतोऽर्धं गृहीत्वा ।

तत्कोणाभ्यां विदध्यादिह खलु परितस्तेन मानेन चिह्ना-
न्यष्टास्र स्यात् समन्तादपि च वितनुयादष्टसूत्रप्रयोगम् ॥

हयांशेऽत्र भागे बहिर्न्यस्य वृत्तं
परिभ्राम्य भूयो युगांशीकृतांशैः ।
त्रिभिः पट्टदीर्घं भवेत् पञ्चसूत्रं
प्रयोगादिदं तेन पञ्चास्रकुण्डम् ॥

क्षेत्रव्यासैर्दशांशैर्बहिरिह विनिधायैकमंशं सुवृत्तं
मानेनानेन कृत्वा पुनरपि च चतुःषष्टिभागीकृतेऽत्र ।
पट्टायामप्रमाणं दृढमतिरमुना सत्रिकैस्त्रिंशदशैः
कुर्यात् सप्तास्रकुण्डं भवति हि तदिदं सप्तसूत्रप्रयोगात् ॥

अत्र चतुर्विंशत्यङ्गुलानि हस्तमात्रकुण्जस्य व्यासः ।

तदुक्तम् (शारदायाम्)

चतुर्विंशत्यङ्गुलाद्यं हस्तं यन्त्रविदो विदुः ।
कर्त्तुर्दक्षिणहस्तस्य मध्यमाङ्गुलिपर्वणः ॥
मध्यस्य दैर्घ्यमानेन मानाङ्गुलमुदाहृतम् ।

(Tripurā-sāra)

जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणञ्चास्त्रसरेणुं प्रचक्षते ॥

त्रसरेणवस्ते त्वष्टौ बालाग्रं तत् स्मृतं बुधैः ।
बालाग्राण्यष्ट लिक्षा तु यूका लिक्षाष्टकं स्मृतम् ॥

अष्टौ यूका यवं प्राहुरङ्गुलं तु यवाष्टकम् ।
हस्तश्चतुर्विंशतिभिरङ्गुलैः समुदाहृतम् ॥

(Gautamīya-tantra)

कर्णसूत्रप्रमाणेन द्विहस्तं कुण्डमुद्धरेत् ।
सर्वकुण्डेषु सर्वत्र वर्धयेद्विधिनाऽमुना ॥

पूर्वपूर्वस्य कुण्डस्य कोणसूत्रं तु यद्भवेत् ।
उत्तरोत्तरकुण्डानां मानं तद्वदुदीरितम् ॥

(Gautamīya-tanrta)

यावन्मानं कुण्डविस्तार उक्तं
तावत् खातस्यापि मानं प्रदिष्टम् ।
कुण्डाकारं पण्डितो यादृशं तत्
तादृग्रूपं मेखलायां विदध्यात् ॥

(Tripurā-sāra)

नव पञ्चाथ चैक वा कर्त्तव्य लक्षणान्वितम् ।

(Āmnāya-rahasya)

अष्टाशक्तौ तु चत्वारि दिक्षु कुण्डानि तान्त्रिके ।
तदशक्तावेकमेव चतुरस्रं प्रकल्पयेत् ॥

(Meru-tantra)

दिक्षु वेदास्रवृत्तानि पञ्चमं त्वीशगोचरम् ।

(Jñāna-ratnāvali)

(7)

कुण्डमेककरं वृत्तं मेखलाकण्ठनाभिमत् ।
नित्ये कर्मणि दीक्षायां शान्तौ पुष्टौ मतं शुभम् ॥

(Pingalā-mata)

चतुरस्रं विप्राणां राज्ञामिह वर्त्तुलं कुण्डम् ।
वणिजामर्धशशाङ्ककारं त्र्यस्रं तु शूद्राणाम् ॥

चतुरस्रं सर्वेषां प्रशास्तमिति केचिदाहुराचार्याः ।
वाञ्छितफलदं यत् तत् कुण्डं भुवि भुक्तिमुक्तिकरम् ॥

षट्कोणमर्धचन्द्राकारं चापि प्रजाकरं कुण्डम् ।
मुक्तिकरं पञ्चास्रं वसुकोणं राज्यदा योनिः ॥

नित्ये नैमित्तिके च प्रविरलमतयः प्राहुरेकेब्धिकोणं
कुण्डं हस्तप्रमाणं स्मरगृहसदृशं चाथ वृद्धं प्रशास्तम् ।
षट्कोणं चार्धदोषाकरसदृशयुतं स्थण्डिलं रत्निमात्रा-
यामं स्वाङ्गुष्ठपूर्वोन्नतमपि सुसमं निर्मितं बालुकाभिः ॥

अनेकदोषं वै कुण्डं मानं न्यूनाधिकं यदि ।
तस्मात् सम्यक् परीक्ष्येद कर्त्तव्य शुभमिच्छता ॥

खाताधिके भवेद्रोगी हीने धेनुधनक्षयः ।
वक्रकुण्डे तु सन्तापो मरणं च्छिन्नमेखले ॥

मेखलारहिते शोकोऽभ्यधिके वित्तसंशयः ।
भार्याविनाशकं कुण्डं प्रोक्तं योन्या विना कृतम् ॥

अपत्यध्वंसनं प्रोक्तं कुण्डं यत् कण्ठवर्जितम् ।
शृङ्गाररहितं यच्च कुण्ड जर्जरमेखलम् ॥

यजमानविनाशाय प्रोच्चाटः स्फुटितो भवेत् ।
सूत्राधिके सुहृद् द्वेषः सूत्रहीने दरिद्रता ॥

अनाले जठरे रोगश्छिन्नकुण्डे त्ववाच्यता ।

(Meru-tantra)

## (8)

## अङ्कुरार्पणम्

प्रागेव दीक्षादिवसात् सप्तभिर्विधिवद्दिनैः ।
सर्वमङ्गलसंपत्त्यै विदध्यादङ्कुरार्पणाम् ॥

(Śāradā–tantra)

प्रतिष्ठायां च दीक्षायां स्नापने चोत्सवे तथा ।
संप्रोक्षणे च शान्त्यर्थं विवाहे मौञ्जिबन्धने ॥

सर्वमङ्गलकार्येषु विदध्यादङ्कुरार्पणम् ।

(Siddhānta-śekhara)

सप्तभिर्नवभिर्वाऽपि दिनैर्दीक्षादिनात् पुरा ।
बीजारोपणकर्मेदं कर्त्तव्यं सर्वकामदम् ॥

मण्डपोत्तरदिग्भागे सुसंवृत्तपरं परे ।
भवने मण्डल कुर्याद्वाक्ष्यां प्राग्वरुणायते ॥

याम्योदीच्यायते वामदीक्षायां संप्रशास्यते ।

(Meru-tantra)

गोमयेनोपलिप्तायां भूमौ दक्षेऽथ वामके ।
सतैलतण्डुलेनैव सतैलविजयाद्रवैः ॥

तत्र रेखाः पञ्चकरदीर्घाकारास्तु पञ्च च ।
वितस्त्यन्तरतो रुद्ररेखाः कार्यास्तथाऽऽयताः ॥

चत्वारिंशत्कोष्ठकाः स्युश्चतुर्विंशतिकोष्ठकैः ।
बाह्यगैस्तत्र वीथी स्यात् पूरयेद्रक्तचूर्णकैः ॥

पश्चात् कोष्ठचतुष्कं यद्ब्रह्मस्थानं तदीरितम् ।
आग्नेयकोष्ठमारभ्य ईशानान्तं प्रपूरयेत् ॥

पीतरक्तश्वेतकृष्णरजोभिः श्रेष्ठमार्गतः ।
कोष्ठद्वयं ततो वीथी रक्तेनैव प्रपूरयेत् ॥

विष्णुस्थानं तदग्रे तु ज्ञेयं कोष्ठचतुष्टयम् ।
प्राग्वद्रजोभिरापूर्य तदग्रेऽपि च वीथिका ॥

प्राक्स्थं कोष्ठचतुष्कं च रुद्रस्थानं तदीरितम् ।
तत्पूर्वं पूर्ववद्रक्तैरारक्तैः सर्वरेखिकाः ॥

विस्तारोन्नतिदैर्घ्येण हस्तमात्रास्तु पालिकाः ।
कार्या डमरुकाकाराश्चतस्रो विष्णुदेवताः ॥

दूर्वाम्रपल्लवाश्वत्थदलोपेताश्च वेष्टिताः ।
सूत्रेण विष्णुस्थानस्य चतुष्कोष्ठे निवेशयेत् ॥

वैरिञ्च्यः पञ्चमुख्यस्ताः कोष्ठजाः षोडशाङ्गुलैः ।
आयामोच्छ्रायदैर्घाद्यैर्युक्ताः पश्चान्निवेशयेत् ॥

ब्रह्मस्थाने पल्लवादिसूत्रैः प्राग्वच्च योजिताः ।
शैवाः शरावाश्चत्वारो भान्वङ्गुलसमुच्छ्रयाः ॥

प्रक्षाल्य सूत्रैः संवेष्ट्य प्राग्वदग्न्यादिषु न्यसेत् ।
शालिपुञ्जेषु गन्धादिदर्भकूर्चयुगेषु च ॥

दिक्षु चत्वारि वक्त्राणि मुखमेकं तदूर्ध्वगम्—इति ।

पूरयेत् तानि पात्राणि वालुकामुत् करीषकैः ।

(Meru-tantra)

## मृत्तिकाहरणम्

गन्धादिभिश्च कुद्दालं पूजयित्वा दिनान्तरे ।
गीतनृत्यसमायुक्तं गजवाजिसमन्वितम् ॥

गुर्वादयो रथारूढा गजारूढास्तथाऽपरे ।
गत्वा तीरं तडागस्य नद्याः पुष्पवनस्य वा ॥

तत्र शुद्धं भुवो भागं दर्भैः संमृज्य चास्त्रतः ।
अभ्युक्ष्य चार्घतोयेन तत्तन्मन्त्रमनुस्मरेत् ॥

हृदा भूमिं समावाह्य गन्धपुष्पैः समर्चयेत् ।
कुद्दालीमस्त्रमन्त्रेण खात्वा भूमिमथो मृदम् ॥

गृहीत्वा वामदेवेन पूरयेत् कांस्यपात्रके ।
हृदा मृदं च संपूज्य वस्त्रेणाच्छाद्य धारयेत् ॥

पुरं वा निलयं वापि सर्वमङ्गलनिःस्वनैः ।
गुरुप्रदक्षिणं कृत्वा मण्डपं त्वानयेत् ततः ॥

एतत् कर्म दिवाकाले कुर्याद्रात्रौ न बुद्धिमान् ।

(Siddhānta-Śekhara)

## रात्रौ बीजारोपणम्

कुजानामधिपः सोमस्तस्माद्रात्रौ तु निर्वपेत् ।

शङ्खस्वनेन नादैश्च पञ्चभिर्ब्राह्मणाशिषा ।
ततः स्वर्णादिके पात्रे दश बीजानि वापयेत् ॥

वं बीजं प्रजपेन्मन्त्री दुग्धेन क्षालयेत् ततः ॥

मूलमन्त्राभिजप्तानि ..............

तानि प्रियङ्गुश्यामाकतिलसर्षपशालयः ।
मुद्गाऽऽढकी सुनिष्पावा खल्वा माषाः प्रकीर्त्तिताः ॥

ब्रह्मपात्रे तु विकिरेत् प्रथमं वैष्णवे ततः ।
ततः शैवे पञ्चवाद्यब्रह्मघोषपुरस्सरम् ॥

हरिद्रोदैश्च संसिच्य वस्त्रैराच्छादयेत् ततः ।
संध्ययोरुभयोरर्धरात्रौ चापि बलि हरेत् ॥

गुरूपदिष्टमार्गेण सम्यक् पात्रत्रयाग्रतः ।
नवाहं तु वलि दद्यात् तत्तदुद्दिश्य दैवतम् ॥

शाल्योदनं तिला लाजाः सक्तवः प्रथमे दिने ।
हरिद्राचूर्णसंयुक्तो भूतेभ्योऽयं वलिर्मतः ॥

एवं द्वितीयदिवसे पितृभ्यस्तिलतण्डुलैः ।
तृतीये सक्तवो लाजा यज्ञेभ्यो दधिसंयुताः ॥

नागेभ्यः सक्तवस्तुर्ये नारिकेलजलप्लुताः ।
दद्यात् पद्माक्षतवलि पञ्चमे ब्रह्मणे मुदा ॥

षष्ठे शिवाय वाऽपूपयुक्तं भक्तं प्रशस्यते ।
गुडोदकं सप्तमेऽह्नि विष्णवे विनिवेदयेत् ॥

विष्णोरेवाष्टमदिने दुग्धोदनवलिः स्मृतः ।
कृसरान्नं तु नवमे विष्णोरेव प्रशस्यते ॥

सोमं संपूजयेन्नित्यमधिवासदिनावधि ।
अधिवासदिने प्राप्ते सोममुद्वासयेद्गुरुः ॥

(Siddhānta-śekhara)

प्ररूढाण्यङ्कुराण्यन्यो न वीक्षेत कदाचन ।
आचार्य एव प्रविशेत् तच्छिष्यो वा तदाज्ञया ॥

(Sārasvata-mata)

एवं गतेषु नवसु दिवसेषु विलोकयेत् ।
सम्यक् कस्योद्गमो जातः कि नष्टं मध्यमं च किम् ॥

सम्यगभ्युद्गते सिद्धिः कुण्ठिते विघ्नमाप्नुयात् ।
कीटभुक्तेऽत्यल्पफलं शटिते सर्वनाशनम् ॥

सिद्धिः प्रियङ्गुभिर्ज्ञेया श्यामाकैः स्त्रीसुखं भवेत् ।
तिलैः पूज्यजनोल्लासः सर्षपैर्नाभिचारकः ॥

शालिभिः सर्वमान्यत्वं मुद्गैर्देवकृपा भवेत् ।
चतुष्पादास्तथाऽऽढक्या निष्पावात् क्षेत्रमन्दिरे ॥

खल्वैः सत्कर्मसिद्धिश्च माषैः शान्तिररेर्भवेत् ।
सर्वैः समुद्गतैर्वामे सिद्धिः पातस्ततोऽन्यथा ॥

(Meru-tantra)

अङ्कुरेऽनुद्गते नष्टे शान्तिहोमं समाचरेत् ।
मूलमन्त्रेण जुहुयादघोरास्त्रेण वा शतम् ॥

(Siddhānta-sāra)

## द्वारपूजा

द्वारमर्घाम्बुना प्रोक्ष्य तन्मध्ये विघ्नपं यजेत् ।
तद्दक्षिणो महालक्ष्मी वामे चापि सरस्वतीम् ॥

द्वारे श्रियं च तन्मध्ये शाखयोर्दक्षिणान्ययोः ।
ऊर्ध्वभागात् तलं यावत् पञ्चपञ्चविभागके ॥

नाम्नश्चाद्यक्षरं बिन्दुयुक्तं नाम च ङेऽन्तकम् ।
समुच्चार्य हृदन्तं च देवानेतान् प्रपूजयेत् ॥

गणपतिं क्षेत्रपालं ततश्च वसुधारया ।
युक्तं शङ्खनिधिं दक्षे वामे वसुमतीयुतम् ॥

पूजयित्वा पद्मनिधिं तदधो दक्षवामतः ।
मायाशक्तिं च चिच्छक्तिं गङ्गां च यमुनां तथा ॥

धातारं च विधातारं देहल्यै नमस्त्वधः ।
आदौ तु पश्चिमद्वारे पूजा चेयं प्रकाशिता ॥

नदी चापि महाकालो द्वारयोर्दक्षवामयोः ।
पूज्यावेवमुदग्द्वारं प्राग्याम्यं च प्रपूजयेत् ॥

द्वारपालौ क्रमात् तेषु गणेशावृषभावपि ।
भृङ्गिरीटस्तथा स्कन्द उमाचण्डेश्वरौ तथा ॥

विष्णोर्नन्दः सुनन्दश्च चण्डश्चापि प्रचण्डकः ।
बलश्च प्रबलश्चैव भद्रश्चापि सुभद्रकः ॥

वक्रतुण्डैकदंष्ट्रौ च महोदरगजाननौ ।
लम्बोदरश्च विकटो गणेशद्वारपालकाः ॥

विघ्नराजो धूम्रवर्णः क्रमात् पश्चिमद्वारतः ।
देव्याः सूर्यस्य योगिन्योऽष्टावेता द्वारपालकाः ॥

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही च तथेन्द्राणी चामुण्डा च श्रिया सह ॥

ततश्च देशिको विघ्नान् दिव्यानालोकनेन च ।
अन्तरिक्षगतानस्त्रोदकैरुत्सादयेत् क्रमात् ॥

पार्थिवान् पार्ष्णिघातैश्च त्रिभिरुत्सार्य यत्नतः ।
अङ्गं संकोच्य किंचित् तु शाखां वामगतां स्पृशन् ॥

उत्सारितानां विघ्नानां ददद्धर्म तु दक्षिणे ।
पादेन दक्षिणेनाथ प्रविशेद्यागमण्डपम् ॥

वाममार्गेऽथ वा शाक्ते वामपादपुरस्सरम् ।
ब्रह्माणं वास्त्वधीशं च नैऋत्यां दिशि पूजयेत् ॥

## (10)

## पञ्चशुद्धिप्रकारः

पञ्चशुद्धि विना पूजा अभिचाराय कल्पते ।
आत्मशुद्धिः स्थानशुद्धिर्मन्त्रस्य शोधनं तथा ॥

द्रव्यशुद्धिर्देवशुद्धिः शुद्धिः पञ्चविधेरिता ।
सस्नानभूतसंशुद्धिप्राणायामादिभिः प्रिये ॥

षडङ्गाद्यखिलन्यासैरात्मशुद्धिरितीरिता ।

पञ्चगव्यार्घतोयाभ्यां प्रोक्षयेन्मण्डपान्तरम् ।
संमार्जनोपलेपाद्यैर्दर्पणोदरवत्कृतम् ॥

विमलैर्धूपदीपादिपुष्पदामादिशोभितम् ।
पञ्चवर्णमयं चित्रं स्थानशुद्धिरियं मता ॥

गृहीत्वा मातृकावर्णान् मूलमन्त्राक्षराणि च ।
क्रमात् क्रमाद् द्विरावृत्तिर्मन्त्रशुद्धिरियं मता ॥

पूजाद्रव्यादि संप्रोक्ष्य मूलास्त्राभ्यां विधानतः ।
दर्शयेद्धेनुमुद्रां च द्रव्यशुद्धिरियं मता ॥

पीठे देवी प्रतिष्ठाप्य सकलीकृत्य मन्त्रवित् ।
मूलमन्त्रेण दीप्तात्मा अभिभाव्योदकेन च ॥

त्रिवारं प्रोक्षयेद्विद्वान् देवशुद्धिरितीरिता ।
पञ्चशुद्धि विधायेत्थं पश्चाद्यजनमाचरेत् ॥

पञ्चशुद्धिविहीनेन यत्कृतं न च तत्कृतम् ।

(Meru-tantra)

## (11)

## विघ्नोत्सारणम्
## मण्डलरचना

आदौ विघ्नं समुत्सार्य पश्चादासनकल्पनम् ।
अथ वा चासने स्थित्वा विघ्नानुत्सारयेत् सुधीः ॥

लाजाचन्दनसिद्धार्थभस्मदूर्वाकुशाक्षताः ।
विकिरा इति निर्दिष्टाः सर्वविघ्नौघनाशकाः ॥

नाराचमुद्रया सम्यगस्त्रमन्त्रेण देशिकः ।
अपक्रामन्तु भूतानि पिशाचाः प्रेतगुह्यकाः ॥

ये चात्र निवसन्त्यन्ये देवता भुवि संस्थिताः ।
अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ॥

ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया ।
श्लोकयोरन्ततश्चास्त्रं पठन् नाराचमुद्रया ॥

क्षिप्त्वा तान्मण्डपस्य ... ... इति ।

(Meru-tantra)

मार्जयेदस्त्रमन्त्रेण तान् मन्त्री दर्भमुष्टिना ।
आसनाय तु वर्द्धन्या ईशाने स्थापयेच्च ताम् ॥

पुण्याहं वाचयित्वा च विप्रान् संतोष्य यत्नतः ।
वेदिकायां लिखेत् पश्चात् सर्वतोभद्रमण्डलम् ॥

(Śāradā-tantra)

## (12)

## करशुद्धिः

सुगन्धिपुष्पाण्यादाय चन्दनाक्तानि मन्त्रवित् ।
हूसौं मन्त्रेण करयोरस्त्रमन्त्रेण मर्दयेत् ॥

तत्पुष्पं वामहस्तेन समादाय च मस्तकम् ।
भ्रामयेत् परितस्तारं जपन्नाघ्राय तत् पुनः ॥

हौ ३ॐ पूर्वं पठेच्छ्लोकमिमं स च निगद्यते ।
ते सर्वे विलयं यान्तु ये मां हिसन्ति हिसकाः ॥

मृत्युरोगभयक्लेशाः पतन्तु रिपुमस्तके ।
अस्त्रमन्त्रेण नाराचमुद्रयेशादिशि त्यजेत् ॥

करशुद्धौ ततोऽस्त्रेण कुर्यात् तालत्रयं ततः ।
ऊर्ध्वोर्ध्वमस्त्रमन्त्रेण दिग्बन्धमपि देशिकः ॥

तेन संजनितं तेजो वह्निप्राकारमुद्रया ।
रक्षेदात्मनि मूलेन प्राणायामत्रयं चरेत् ॥

(Meru-tantra)

## (13)

प्राणो वायुः शरीरस्य आयामस्तस्य निग्रहः ।
प्राणायाम इति प्रोक्तो द्विविधः कथ्यते हि सः ॥

सगर्भो मन्त्रजापेन निगर्भो मात्रया भवेत् ।

(Sāra-samucchaya)

पुनरुत्पातयेद्देहं पवित्रं परमात्मनः ।
परब्रह्मात्मिका विद्या प्रकृतिर्मातृका परा ॥

अजायत जगन्मातुराकाशं नभसोऽनिलः ।
समीरणादभूद्वह्निर्वह्नेरापस्ततो मही ॥

स्वीयमेभ्योऽपि भूतेभ्यस्तेजोरूपं कलेवरम् ।
देवताराधने योग्यमुत्पन्नमिति भावयेत् ॥

भूतशुद्धिरियं प्रोक्ता महापापौघनाशिनी ।
अथ वा कुण्डलीं देवी पञ्चभूतादिना सह ।
परमात्मनि संयोज्य तयोरैक्य विभाव्य च ॥

ध्यानयोगेन मनसा सोऽहंसोऽहं विभावयेत् ।
भूतशुद्धि विधायैवं प्राणस्थापनमाचरेत् ।

(Meru-tantra)

प्राणप्रतिष्ठया पश्चाज्जीवं देहे नियोजयेत् ।
मुखवृत्त समुच्चार्य हंसस्तु विपरीततः ॥

उद्धरेत् परमेशानि विद्येयं त्र्यक्षरी भवेत् ।
प्राणप्रतिष्ठामन्त्रोऽयं सर्वकर्मणि साधयेत् ॥

(Jñānārṇava)

प्राणायामत्रय कृत्वा मातृकान्यासमाचरेत् ।

मन्त्रा मूकत्वमायान्ति विन्यासेन विना लिपेः ।
सर्वमन्त्रप्रसिद्ध्यर्थ तस्मादादौ लिपि न्यसेत् ॥

(Phetkāriṇi-tantra)

* * * * * *

# VI

Vaikhānasāgama is a division of the Vaishṇava-āgama. It is affiliated to the Vedic tradition in its entirety. The following extracts dealing with consecretion of the shrine and the icons are taken from Bhṛgu's *Khilādhikāra* (also known as *Bhṛgu-samhitā*) (ed.. by Pārthasārathi Bhattāchārya, TTD Publication, Tirupati, 1961).

## (1)

## CONSECRATION

### प्रतिष्ठाविधिः – आचार्यलक्षणम्

अतः परं प्रवक्ष्यामि स्थापनक्रममुत्तमम् ।
स्थापनारम्भकाले तु यजमानोऽथ भक्तिमान् ॥ १ ॥

वैखानसविदो विप्रान् नमस्कृत्य स्वदैववत् ।
तेषु ज्ञानोत्कटं ज्ञात्वा नमस्कृत्य स्वदैववत् ॥ २ ॥

वैखानसेन सूत्रेण निषेकादिक्रियान्वितम् ।
विप्रं स्वाध्यायसंयुक्त गृहस्थ लक्षणान्वितम् ॥ ३ ॥

शौचाचारविधि तद्वत्सन्ध्यौपासनमेव च ।
औपासनं वैश्वदेवं जपहोमव्रतानि च ॥ ४ ॥

वैखानसेन विधिना कुर्वाणं शान्तमानसम् ।
श्रद्धाभक्तिसमायुक्तं सर्वकर्मसु निश्चलम् ॥ ५ ॥

आहुतीनां पदार्थज्ञमग्निकार्यपरायणम् ।
भूम्याद्येकादशविधिक्रमज्ञं भगवत्परम् ॥ ६ ॥

पुष्टगात्रं सुसम्पन्नं जितेन्द्रियमकल्मषम् ।
युवानं स्थविरं वाऽथ ज्ञानिनं कर्मकारिणम् ॥ ७ ॥

सर्वलक्षणसम्पन्नं वृणुयात्कारको गुरुम् ।
यजमानो गुरुश्चैव देवदेवं प्रणम्य च ॥ ८ ॥

यजमानस्तूक्तकाले गुरवे दक्षिणां ददेत् ।
स्वदेववन्नमस्कृत्य कार्यारम्भमुपक्रमेत् ॥ ९ ॥

उक्तलक्षणसम्पन्नानृत्विजो वृणुयात्सतः ।

## मुहूर्तकालः

अयने चोत्तरे कुर्यात्कार्यारम्भं हरेः क्रतोः ॥ १० ॥

मासानां फाल्गुनः श्रेष्ठश्चैत्रो वैशाख एव वा ।
तौ मार्गशीर्षमाघौ द्वौ निन्दितौ ब्रह्मणा पुरा ॥ ११ ॥

शेषेष्वपि च कर्तव्यं त्वरितेनेति मे मतिः ।
पूर्वपक्षे प्रकुर्वीत कृष्णपक्षे त्रिथाऽद्यके ॥ १२ ॥

त्रिषूत्तरेषु रोहिण्यां हस्ते स्वात्यां पुनर्वसौ ।
श्रवणे वारुणे चैव मैत्रे वा वसुदैवते ॥ १३ ॥

अन्यस्मिन् पुण्यनक्षत्रे प्रशस्ते श्रुतिचोदिते ।
युग्माश्च तिथयस्सर्वाः प्रशस्ता विष्टिवर्जिताः ॥ १४ ॥

गुरुभार्गवसौम्यानां वारा ग्राह्याः शुभाश्च ते ।
चरराशिं विवर्ज्यैव स्थिरराशिं प्रगृह्य च ।
ग्रामस्य यजमानस्य चानुकूले दिने चरेत् ॥ १५ ॥

## अङ्कुरार्पणम्

अतः परं प्रवक्ष्यामि विधिना चाङ्कुरार्पणम् ।
भूपरीक्षादिकं कर्म यस्मिन्नहनि कारयेत् ॥ १६ ॥

तस्मात्तु दिवसात्पूर्व नवमे वाऽथ सप्तमे ।
पञ्चमेऽहनि वा कुर्याद्विधिना चाङ्कुरार्पणम् ॥ १७ ॥

अङ्कुरार्पणकार्यार्थं पालिकादीन् समाहरेत् ।
पालिकाः कुम्भकांश्चापि शरावः नापि सङ्ग्रहेत् ॥ १८ ॥

## पालिकादीनां लक्षणम्

बिम्बेन कौतुकेनेव समोच्चाः पालिका मताः ।
तदर्धमाना वा कुर्यात्तालमात्रमिताश्च वा ॥ १९ ॥

ध्रुवबेरमुखायामं पलिकायामविस्तरम् ।
तदर्ध मूलविस्तारं क्रमशो ह्रासयद्बुधः ॥ २० ॥

तच्चतुर्थैकहीनस्तु छिद्रकुम्भः प्रमाणतः ।
त्रिभागादेकभागस्तु कुम्भद्वारस्य चोच्छ्रयः ॥ २१ ॥

आयामात्त्रिगुणो नाहः द्वारो भाग उदाहृतः ।
पञ्चद्वारसमायुक्तान् छिद्रकुम्भान्विशेषतः ॥ २२ ॥

षडङ्गुलसमुत्सेधान् शरावानपि सम्भरेत् ।
विस्तारादि शरावाणां पालिकासममुच्यते ॥ २३ ॥

एवमाहृत्य यत्नेन सम्यग्दग्धं मनोहरम् ।
ब्राह्मणो यजमानश्चेत् गृह्णीयात्तानि षोडश ॥ २४ ॥

क्षत्रियो द्वादशाष्टौ तु वैश्यस्तानि सुसम्भरेत् ।
चत्वारि शूद्रो गृह्णीयात्पालिकादीनि वै पृथक् ॥ २५ ॥

एवमाहृत्य यत्नेन पश्चाद्बीजानि चाहरेत् ।
कङ्कुमुद्गयवांश्चैव निष्पावान् सर्षपानपि ॥ २६ ॥

आतपेनाथ संशोष्य सारभूतानि सम्भरेत् ।
जले तु निक्षिपेत्तानि यावदङ्कुरदर्शनम् ॥ २७ ॥

## रात्रावङ्कुरार्पणम्

न प्रीतये भगवते कृतमह्न्यङ्कुरार्पणम् ।
यस्मात्सर्वप्रयत्नेन कुर्यान्निश्यङ्कुरार्पणम् ॥ २८ ॥

प्रदोषे वाऽर्पणं कुर्यादङ्कुराणां विशेषतः ।

## अङ्कुरवेदिः

आलयात्पुरतो वापि उत्तरे वा मनोरमे ॥ २९ ॥

मण्डपेऽष्टस्तम्भयुते चतुरश्रे सुविस्तृते ।
ऊर्ध्वेऽलङ्कारसहितवितानेन स्वलङ्कृतम् ॥ ३० ॥

मण्डलान्युपलिप्याऽलङ्कुर्याद्वर्णैस्तु पञ्चभिः ।
व्रीहिभिस्तण्डुलैर्वाऽत्र पीठं सम्यक्प्रकल्पयेत् ॥ ३१ ॥

मध्ये ब्रह्माणमुद्दिश्य षोडशाङ्गुलमायतम् ।
त्रिवेदिसहितं पीठं कुर्यात्कर्माङ्गुलोच्छ्रयम् ॥ ३२ ॥

प्राच्यां शेषं समभ्यर्च्य वक्रतुण्डञ्च दक्षिणे ।
पङ्क्तीशं पश्चिमेऽभ्यर्च्य सोमञ्चैव तथोत्तरे ॥ ३३ ॥

विष्वक्सेनञ्च तत्रैव पूजयेच्च यथाविधि ।
इन्द्रादीशानपर्यन्तं जयादीरपि चार्चयेत् ॥ ३४ ॥

भागोन्नतं द्वादशाङ्गुलायतं तिसृभिस्तथा ।
वेदिभिस्सहितं कुर्यात्पीठान्येषां पृथक् पृथक् ॥ ३५ ॥

## देवतापदानि

मध्ये ब्रह्माणमावाह्य ब्रह्माणञ्च समर्चयेत् ।
देवानन्यांश्चार्चयेत्तु तत्तत्पूजाक्रमेण ह ॥ ३६ ॥

## उत्तमाधमविवेकः

निवेदनसमायुक्तं सर्वेषामुत्तमं भवेत् ।
षण्णां ब्रह्मादिदेवानामर्चनं मध्यमं भवेत् ॥ ३७ ॥

ब्रह्मणे विनिवेद्यान्यदेवानां बलिंदापनम् ।
अधमो मार्ग उद्दिष्ट इति प्रोवाच पूर्वजः ॥ ३८ ॥

## पालकादिस्थापनम्

एवं कृत्वा तु यत्नेन पालिकादीन् प्रगृह्य च ।
मृद्धिर्वा सिकताभिर्वा पालिकादीन् प्रपूरयेत् ॥ ३९ ॥

करीषैर्वा पूरयित्वा बीजान्याहृत्य वै ततः ।
पङ्क्तेरुत्तरतः स्थाप्य पालिकादींश्च पूजयेत् ॥ ४० ॥

ब्रह्मणः परितः स्थाप्य पालिकादीन् विचक्षणः ।
पालिकासु च सर्वासु मेदीनीमर्चयेत्क्रमात् ॥ ४१ ॥

छिद्रकुम्भेषु राकाञ्च शरावेषु पृथुष्टुकाम् ।
आवाह्याभ्यर्च्य चार्घ्यान्तं बीजानि च समर्पयेत् ॥ ४२ ॥

## बीजावापनम्

नववस्त्रपरीधानस्सोत्तरीयाङ्गुलीयकः ।
गुरुर्वा गुरुपत्नी वा यजमानोऽथवा पुनः ॥ ४३ ॥

यजमानस्य पत्नी वा वापयेदङ्कुरान् पृथक् ।
शूद्रश्चेद्यजमानस्तु गुरुरेव समर्पयेत् ॥ ४४ ॥

'सोम राजान'मित्युक्त्वा वापनं समुदाहृतम् ।
तत्काले तूर्यघोषैश्च जयशब्दैस्समन्वितम् ॥ ४५ ॥

'वारीश्चतस्त्र' इत्युक्त्वा तोयं तत्र समर्पयेत् ।
ततो वस्त्रैस्समाच्छाद्य तानि गुप्ते विनिक्षिपेत् ॥ ४६ ॥

पुण्याहं वाचयेत्तत्र विधिनैव यथाक्रमम् ।
यजमानो मुदा युक्तो गुरवे दक्षिणां ददेत् ॥ ४७ ॥

## सम्भाराहरणम्—यज्ञपात्राणि

अत ऊर्ध्वं प्रवक्ष्यामि द्रव्याणामत्र सङ्ग्रहम् ।
अश्वत्थञ्च शमीजातं सर्वयत्नेन सम्भरेत् ॥ ४८ ॥

त्वगादीत्संव्यपोह्यैव काष्ठं सम्यक् प्रगृह्य च ।

## अग्निमन्थनसाधनानि

पट्टिकामधरां कुर्याच्चतुर्विंशद्भिरङ्गुलैः ॥ ४९ ॥

उत्सेधो भाग उद्दिष्टः विस्तारस्तु षडङ्गुलः ।
ऊर्ध्वपट्टीञ्च तन्मानामवक्रां सम्प्रगृह्य च ॥ ५० ॥

दण्डं चतुर्विंशायामं द्वादशाङ्गुलनाहकम् ।
अधरारणि तु हरिणीमूर्ध्वञ्चैव हुताशनम् ॥ ५१ ॥

दण्डञ्च विष्णुरूपञ्च कल्पयित्वा विचक्षणः ।
एवं ससाध्य यत्नेन गुप्ते तानि विनिक्षिपेत् ॥ ५२ ॥

## यज्ञपात्रदारूणि

पलाशबिल्वखदिरद्रुमैः पात्रान्तराणि च ।
कल्पयेच्च स्रुवादीनि यज्ञोपकरणानि वै ॥ ५३ ॥

## स्रुवः

द्विप्रादेश स्रुव कुर्यात्प्रादेशपरिमण्डलम् ।
प्रादेशपरिणाहन्तु स्रुवमूलतले विदुः ॥ ५४ ॥

आनुपूर्व्येण सङ्क्षिप्तं मूलाद्ग्रीवान्तमाचरेत् ।
तदर्धाग्रपरीणाहः बिलादर्वाग्विधीयते ॥ ५५ ॥

गोलकं बिलविस्तारः माषाच्छादनगर्तकः ।
एवं स्रुवं प्रकुर्वीत त्रिभागं परिकल्प्य च ॥ ५६ ॥

## जुहूः

द्वितालमात्रमायामः तदर्धं नाह उच्यते ।
एवं मूलं प्रकुर्वीत पद्मस्य मुकुलोपमम् ॥ ५७ ॥

भागं पद्मं समुद्दिष्टं मूले चाग्रमुदाहृतम् ।
मूलादर्धपरीणाहं दण्डाग्रे तु विचक्षणः ॥ ५८ ॥

अग्रे चाष्टाङ्गुलायामं तलं सम्यक्समाचरेत् ।
उभौ पार्श्वौ च तन्मानं त्रिकोणञ्चाग्रसंयुतम् ॥ ५९ ॥

भित्तिपार्श्व प्रकुर्वीत एकाङ्गुलमुदाहृतम् ।
निम्नं विस्तारमुद्दिष्टं क्रमेणाग्रं क्षयं चरेत् ॥ ६० ॥

शेषं तलं प्रकुर्वीत सर्व युक्त्या समाचरेत् ।
एवं जुहूं प्रकुर्वीत दर्वी पश्चात्समाचरेत् ॥ ६१ ॥

## दर्वी

द्वितालमात्रमायामं घनमेकाङ्गुलं भवेत् ।
अग्रे षडङ्गुलायामं विस्तारं भाग उच्यते ॥ ६२ ॥

मूलं पञ्चाङ्गुलायामं तदर्धं विस्तृतं भवेत् ।
अग्रान्मूलान्तरञ्चैव मध्ये गोलकमुच्यते ॥ ६३ ॥

अग्रान्मध्यात् क्षयं कुर्यान्मूलान्मध्यात् क्षयञ्चरेत् ।
शेषं युक्त्या प्रकुर्वीत दर्वीञ्चैव विचक्षणः ॥ ६४ ॥

## उपजुहूः

द्वितालमात्रमायामं तदर्ध नाह उच्यते ।
एवं मूले प्रकुर्वीत अग्रञ्चैव तदर्धकम् ॥ ६५ ॥

ऊर्ध्व प्रादेशमात्रन्तु चतुरश्रं समन्ततः ।
भित्तिरेकाङ्गुलं प्रोक्तमुन्नतं तु तदर्धकम् ॥ ६६ ॥

मध्ये प्रादेशमात्रन्तु नाहं वै वर्तुलाकृतिम् ।
निम्नं चतुर्यवं प्रोक्तं क्रमान्निम्नं विचक्षणः ॥ ६७ ॥

ऊर्ध्वं षडङ्गुलायामं त्रियश्रं मुकुलोपमम् ।
घृतधारां प्रकुर्वीत वर्तुलां मुकुलाकृतिम् ॥ ६८ ॥

यवद्वयसुविस्तारं तदर्धं निम्नमुच्यते ।
उपजुह्वास्समुद्दिष्टमिति प्रोवाच पूर्वजः ॥ ६९ ॥

## समिधः—आज्यम्

वटबिल्वपलाशानां न्यग्रोथाश्वत्थयोरपि ।
अपामार्गौदुम्बरयोः शम्याश्च समिधः पृथक् ॥ ७० ॥

अष्टाधिकशतं कुर्यात्प्रतिहोममयं क्रमः ।
सहस्रमाज्यसंयुक्ताः सभ्यस्य समिधः स्मृताः ॥ ७१ ॥

यत्नेन चाहरेदाज्यं कापिलं गव्यमेव च ।

## तोरणानि

तोरणानि च कुर्वीत चतुर्दिक्षु यथाक्रमम् ॥ ७२ ॥

अश्वत्थं पूर्वतः कुर्यात्पैतृकं दक्षिणे तथा ।
पश्चिमे क्षीरवृक्षञ्च वटवृक्षमथोत्तरे ॥ ७३ ॥

पञ्चहस्तसमुत्सेधं द्विहस्तयुतविस्तृतम् ।
मध्ये त्रिशूलं कुर्यात्तु एकारत्निप्रमाणतः ॥ ७४ ॥

अथवा कारयेद्विद्वान् पादायामं विचक्षणः ।
पादयोरन्तरं तस्य विस्तारः समुदाहृतः ॥ ७५ ॥

एवं यज्ञालये प्रोक्तस्तोरणानां विधौ विधिः ।
गोपुरेषु विमानेषु तोरणानि समाचरेत् ॥ ७६ ॥

अश्वत्थेनैव कुर्याद्वा तत्तद्द्वारप्रमाणतः ।
एषामलाभे चाश्वत्थं गृह्णीयाद्विधिकोविदः ॥ ७७ ॥

## दर्भमाला

दर्भमाला च कर्तव्या दर्भैः छिन्नैः समाऽयतैः ।
द्वितालमात्रं तं दर्भं लम्बनार्थ विहाय च ॥ ७८ ॥

प्रक्षिप्य दर्भौ द्वौ द्वौ तु मध्ये पर्वणि पर्वणि ।
दर्भैः शिष्टाङ्गभागैस्तु रज्जुं कुर्यात्प्रदक्षिणम् ॥ ७९ ॥

एवं संवर्तिताग्रैस्तु दर्भमालाऽनुपालिता ।
'ग्रहतारागणास्सर्वे रज्ज्वग्रे तु समर्चिताः ॥ ८० ॥

परिरक्षन्तु देवा हि दर्भमालागणे स्थिताः ।
पिशाचदैत्यरक्षांसि विधूय परितस्त्विह ॥ ८१ ॥

सन्ध्याकाले तानि देवाः कालचक्रे स्थितानि वै' ।
इत्युक्त्वा नित्यकार्येषु दर्भस्थानमपेक्ष्य च ॥ ८२ ॥

दैविकं कर्म कुर्वीत रक्षार्थं दर्भमालया ।

## यागशालाविधिः

अतः परं प्रवक्ष्यामि यज्ञशालाविधिं परम् ॥ ८३ ॥

प्रमुखे दक्षिणे वापि यज्ञशालां प्रकल्पयेत् ।
षोडशस्तम्भसंयुक्तां मध्ये पादविवर्जिताम् ॥ ८४ ॥

पादैर्द्वादशभिर्युक्तां कूटं वा परिकल्पयेत् ।
पादान्तरं चतुर्हस्तं चतुर्दिक्षु यथाक्रमम् ॥ ८५ ॥

एकहस्ततलोत्सेधं तलं कृत्वाऽतिसुन्दरम् ।
तोरणैः पूर्णकुम्भैश्च अलङ्कुर्यान्मनोहरम् ॥ ८६ ॥

तन्मध्ये स्थण्डिलं कृत्वा चतुर्हस्तप्रमाणतः ।
एकहस्ततलौत्सेधं चतुरश्रं विधानतः ॥ ८७ ॥

तदर्धमथवा कुर्याद्बिम्बाध्यर्धमथापि वा ।
अथवा कारयेद्विद्वान् प्रपां लक्षणसंयुताम् ॥ ८८ ॥

देवालयस्य परितः प्रपां कृत्वा विशेषतः ।
वितानेन समाच्छाद्य स्थूणाश्चाऽवेष्ट्य यत्नतः ॥ ८९ ॥

मुक्तादामपताकादिसर्वालङ्कारसंयुतम् ।
दर्भमालापरिक्षिप्तं तोरणैश्चाप्यलङ्कृतम् ॥ ९० ॥

कृत्वैव यज्ञवाटन्तु पश्चाद्बिम्बन्तु शोधयेत् ।

## बिम्बशुद्धिक्रमः

नवबिम्बप्रतिष्ठा चेत् बिम्बशोधनमुच्यते ॥ ९१ ॥

आलयस्योत्तरे पार्श्वे कुर्यात्कूटं प्रपान्तु वा ।
चतुर्हस्तायतां दिक्षु प्रत्येकं चतुरश्रकाम् ॥ ९२ ॥

चतुर्हस्तसमायुक्तां चतुर्हस्तोच्छ्रयां तथा ।
तालोत्सधं तलं तत्र वास्तुहोमार्थमिष्यते ॥ ९३ ॥

मण्डपं वा प्रपां वाऽथ विमानाभिमुखे तथा ।
कारयेदधिवासार्थमक्ष्युन्मेषाय कर्मणे ॥ ९४ ॥

सर्वेषां मण्डपानाञ्च प्राकारस्यालयस्य च ।
स्तम्भवेष्टनवस्त्रैश्च नानावर्णपरिष्कृतैः ॥ ९५ ॥

अलङ्कारक्रियां कुर्याद्वाद्यघोषपुरस्सरम् ।

## कौतुकस्य पीठसङ्घातः

कृत्वाऽङ्कुरार्पणं रात्रौ प्रभातेऽर्चा नवां यदि ॥ ९६ ॥

कौतुकं बेरमादाय पीठं कृत्वा सलक्षणम् ।
पश्चात् शिल्पिनमाहूय सम्पूज्याभरणाम्बरैः ॥ ९७ ॥

तदर्चायास्तु पीठे तु मध्ये च परितस्तथा ।
पञ्च स्थानानि निम्नानि शिल्पिना परिकल्पयेत् ॥ ९८ ॥

तेषां मध्ये पदे रत्नं 'ब्रह्मा देवा'दिना न्यसेत् ।
एन्द्रे वज्रं सुसन्न्यस्य याम्ये वेदूर्यमेव च ॥ ९९ ॥

वारुणे स्फटिकं न्यस्य सौम्यै मौक्तिकमेव च ।
तत्तन्मन्त्रं समुच्चार्य तत्तद्दिक्षु सुसन्न्यसेत् । ॥ १०० ॥

एवं रत्नानि विन्यस्य पञ्चस्थानेषु मन्त्रवित् ।
ताम्रेण शिल्पिना नाति समाच्छाद्य दृढं पुनः ॥ १०१ ॥

तस्मिन् पीठे क्रमेणैव शिल्पिनाऽर्चा सुयोजयेत् ।
दृढं संयोज्य तं पीठे निश्छिद्रमचलं चरेत् ॥ १०२ ॥

## अधिवासविधिः

नदीतटाकवापीषु देवागारसमीपतः ।
जलेऽधिवासनं कृत्वा रक्षां सर्वत्र कारयेत् ॥ १०३ ॥

दर्भमालासमायुक्तं परित्राणसमन्वितम् ।
जलं क्षीरोदधिं स्मृत्वा वैष्णवं मन्त्रमुच्चरन् ॥ १०४ ॥

वस्त्रयुग्मं समास्तीर्य देव्योर्देवस्य वै पृथक् ।
प्राक्शिरः शाययेद्देवं विष्णुसूक्तं समुच्चरन् ॥ १०५ ॥

देव्यौ च शाययेत्पश्चात् तत्तन्मन्त्रमुदीरयन् ।
पञ्चाहं त्रियहं वापि एकाहमथवा तथा ॥ १०६ ॥

## पञ्चगव्याधिवासादिः

पश्चाद्देवेशमादाय पञ्चगव्येऽधिवासयेत् ।
जलद्रोणीं पूरयेच्च पञ्चगव्यप्रयोगतः ॥ १०७ ॥

जलद्रोण्या अलाभे तु अवटं वापि खानयेत् ।
आलयाद्दक्षिणे पार्श्वे उत्तरे वा मनोरमे ॥ १०८ ॥

बिम्बाध्यर्धप्रमाणेन आयतं चतुरश्रकम् ।
विस्तारं तु तदर्धं स्यात् बिम्बदघ्नञ्च निम्नकम् ॥ १०९ ॥

पञ्चगव्यैस्तु सम्पूर्य पुष्पाक्षतसमन्वितम् ।
कुशदर्भसमायुक्तं गन्धधूपसमन्वितम् ॥ ११० ॥

एवं संसाध्य यत्नेन विष्णुसूक्तं समुच्चरन् ।
शाययद्देवदेवेशं प्राक्शिरः प्रयतात्मवान् ॥ १११ ॥

द्व्यहं तथैवमेकाहं पञ्चगव्येऽधिवासयेत् ।
पश्चाद्देहेशमादाय कुशोदे शाययेत्तथा ॥ ११२ ॥

चलेषु नवबिम्बेषु कृत्वा चैवाक्षिमोचनम् ।
पश्चाज्जलाधिवासादि कुर्यादित्येव शासनम् ॥ ११३ ॥

## अक्ष्युन्मोचनम्–(अमन्त्रकम्)

प्रतिष्ठोक्तदिनात्पूर्व त्रियहे वै ध्रुवे नवे ।
शिल्पशास्त्रोक्तविधिना शिल्पिना चाक्षिमोचनम्॥ ११४ ॥

कारयित्वा गुरुः धीमान् दृष्टिमण्डलमार्गतः ।
दृष्टिमण्डलमध्ये तु यूकामात्रं व्यपोहयेत् । ॥ ११५ ॥

अमन्त्रकञ्च यत्सर्व शिल्पिना कारयेत्क्रमात् ।
वस्त्रैराभरणैस्सर्वैः पूजयित्वा तु शिल्पिनम् ॥ ११६ ॥

## पीठमानम्

तस्मिन् काले ततः कुर्याज्जीवस्थाने विधानतः ।
गर्भालये ब्रह्मभागे प्राणपीठमुदाहृतम् ॥ ११७ ॥

अर्चापीठप्रमाणं स्यात्प्रतिदिक् चतुरङ्गुलम् ।
ऊर्ध्ववेद्यास्तु विस्तारो द्वादशाङ्गुलमुन्नतिः ॥ ११८ ॥

भागावनतमेकैकं भागविस्तारसंयुतम् ।
एवं त्रिवेदिसहितमर्चनापीठमाचरेत् ॥ ११९ ॥

श्रीभूमी तु समुद्दिश्य दक्षिणोत्तरयोः क्रमात् ।
एवमेव प्रकुर्वीत सहैव पृथगेव वा ॥ १२० ॥

बहुबेरप्रतिष्ठा चेत्तत्तत्स्थाने विशेषतः ।
तत्तत्पीठप्रमाणेन चैवं पीठानि कल्पयेत्- ॥ १२१ ॥

## विमानशुद्धिः

अथ शुद्धिक्रियामार्गं वक्ष्ये देवविमानयोः ।
विमानशुद्धि वक्ष्यामि प्रथमं विधिना बुधाः ॥ १२२ ॥

श्वेतश्लक्ष्णसुधाक्षोदैः स्थूलं स्थाने तु पूर्वतः ।
आलेपनं प्रकुर्वीत बालस्थाने मृदा तथा ॥ १२३ ॥

शिल्पिकर्मसमाप्तिञ्च शिल्पशास्त्रक्रमेण तु ।
कृत्वा च शिल्पिनं पूज्य विमानञ्चाङ्कणं तथा ॥ १२४ ॥

संशोधयेत्पुनस्तत्र गोभिः शुद्धिञ्च कारयेत् ।
विमानाङ्कणमाक्षिप्य दूर्वाग्रान् सतृणानपि ॥ १२५ ॥

पलालञ्चापि निक्षिप्य पात्राणि सजलानि च ।
पञ्चरात्र त्रिरात्रं वा एकरात्रमथापि वा ॥ १२६ ॥

समतीते दशाहे तु धेनूना निकरैर्गवाम् ।
देवालयाङ्कणे चैव शुद्ध्यर्थं शोधयेत्तदा ॥ १२७ ॥

रात्रौ देवालयस्थानां गवा दुग्ध न चाहरेत् ।
दुग्धपानादिसन्तृप्तैः वत्सकैः कृतवल्गितैः ॥ १२८ ॥

वत्सपीतस्तनाग्रेभ्यः संसृतक्षीरबिन्दुभिः ।
गोरोमभिः सफेनैश्च गोशकृन्मूत्रसञ्चितैः ॥ १२९ ॥

शुद्धं भवति तत् स्थानं गावः शुद्धाश्शुभा मताः ।
गोभिः शुद्धिञ्च कृत्वा तु कुर्याद्ब्राह्मणभोजनम् ॥ १३० ॥

गर्भगेहे बहिर्वापि ब्राह्मणान् भोजयेत्तदा ।
चतुर्विंशति पञ्चाशच्छतं वाप्यधिकं ततः ॥ १३१ ॥

पवित्रमिति सम्प्रोक्तं तत्स्थाने भोजयेत्ततः ।
भोजनानन्तरं तेषामुच्छिष्टं परिशोधयेत् ॥ १३२ ॥

## बिम्बशुद्धिः

बिम्बशुद्धिं प्रवक्ष्यामि ध्रुवकौतुकयोस्ततः ।
वर्णयुक्ते ध्रुवे तत्र चित्राभासे विशेषतः ॥ १३३ ॥

तदालयकृतेनापि वास्तुहोमेन वै तथा ।
अङ्गहोमेन चेष्टेन पुण्याहं प्रोक्षणं चरेत् ॥ १३४ ॥

द्विजेभ्यो रुक्मदानेन यथाशक्ति कृतेन तु ।
भोजनेन च विप्राणां बेरशुद्धिर्विधीयते ॥ १३५ ॥

शिल्पिनन्तु विसृज्यैव पश्चात्कार्यं समाचरेत् ।
परेऽह्णि कार्यं मन्त्रेण गुरुणा चाक्षिमोचनम् ॥ १३६ ॥

अक्षिमोचनमुद्दिष्टं बेरशुद्ध्यर्थमादितः ।

## श्रामणकाग्निकुण्डकल्पनम्

पूर्वन्तु वास्तुहोमार्थमालयस्य तथोत्तरे ॥ १३७ ॥

स्थण्डिलञ्चोपलिप्यैव अलङ्कुर्यात्तु वर्णकैः ।
सागरङ्गमनद्यादावाहृत्य सिकताः शुभाः ॥ १३८ ॥

द्वादशाङ्गुलमुत्सेधं तावद्घनमनिन्दितम् ।
द्वात्रिंशदङ्गुलायामं चतुरश्रं समन्ततः ॥ १३९ ॥

ततो मध्येऽवकाशः स्याच्चतुर्विंशतिकाङ्गुलम् ।
अवगाढन्तु तस्यैव द्वादशाङ्गुलमिष्यते ॥ १४० ॥

ततः कुर्याद्बहिर्वेदिं द्विचत्वारिंशदङ्गुलैः ।
उत्सेधो भाग उद्दिष्टः ऊर्ध्ववेद्या विधानतः ॥ १४१ ॥

मध्यवेद्यास्तु विस्तारः पञ्चाङ्गुल इति स्मृतः ।
उत्सेधो भाग उद्दिष्टः मध्यवेद्याः प्रकीर्तितः ॥ १४२ ॥

ततः कुर्यादधोवेदि पञ्चाशद्भिरथाङ्गुलैः ।
उत्सेधो भाग उद्दिष्टः विस्तारस्तु द्विगोलकः ॥ १४३ ॥

दक्षिणे ब्रह्मणः पीठं षोडशाङ्गुलमायतम् ।
चतुरश्रं समं कुर्यात् भागोन्नतिसमन्वितम् ॥ १४४ ॥

तस्य पश्चिमभागे तु पितृस्थानं प्रकल्पयेत् ।
षोडशाङ्गुलमायामः उन्नतं गोलकं भवेत् ॥ १४५ ॥

शूर्पाकारञ्च कृत्वा तु दक्षिणाग्रं प्रकल्पयेत् ।
उत्तरे सोममुद्दिश्य षोडशाङ्गुलमायतम् ॥ १४६ ॥

भागोन्नतं प्रकुर्वीत समवृत्तं तु पीठकम् ।
वेदिप्रमाणं कर्तव्यं सीवनीक्षतचन्द्रवत् ॥ १४७ ॥

एवं श्रामणकं कुण्डं कृत्वाऽथाग्निञ्च साधयेत् ।

## अग्निमन्थनम्

आलयात्पुरतो वाऽपि उत्तरे वा मनोरमे ॥ १४८ ॥

स्थण्डिलञ्चोपलिप्यैव वर्णालङ्कारमाचरेत् ।
धान्यराशिञ्च संस्तीर्य दर्भानुपरि संस्तरेत् ॥ १४९ ॥

अरणी द्वे सुसन्न्यस्य पूजयेत्तु यथाविधि ।
अर्चयेदधरारण्यां हरिणी विष्णुवल्लभाम् ॥ १५० ॥

विष्णुमभ्यर्चयेद्दण्डे ऊर्ध्वारण्यां हुताशनम् ।
आचार्यः प्राङ्मुखः स्थित्वा योजयित्वाऽथ मन्त्रवित् ॥ १५१ ।

रज्जुं मौञ्जीमयी कृत्वा त्रिवृतां शेषमर्चयेत् ।
'जातवेद' इति प्रोच्य मन्थनं सम्यगाचरेत् ॥ १५२ ॥

जपन् वैश्वानरं सूक्तमरण्यां मन्थनं चरेत् ।
यावदग्निसमुत्पत्ति तावद्वै मन्थनं भवेत् ॥ १५३ ॥

उत्पन्नमग्निमादाय 'अयन्त' इति चोच्चरन् ।
परितस्तु करीषाद्यैः योजयित्वाऽथ युक्तितः ॥ १५४ ॥

इन्धनानि सुनिक्षिप्य जातमग्नि सुरक्षयेत् ।

## ऋत्विग्वरणम्

त्रियहं द्वियह वाऽपि एकाहं वा विधानतः ॥ १५५ ॥

उपवासञ्च कृत्वा तु ऋत्विजः प्रयतास्तथा ।
स्नात्वा स्नानविधानेन जप्त्वा सूक्तानि वै क्रमात्॥ १५६ ॥

प्राणायामसहस्रं तु कुर्युः सर्वे जितेन्द्रियाः ।
शतञ्चाष्टसमायुक्तं कुर्युर्वाऽत्र समाहिताः ॥ १५७ ॥

ब्रह्मयज्ञञ्च कृत्वा तु स्वकीयाग्नीनुपास्य च ।
ध्यात्वा नारायणं देवं समासीरन् यतव्रताः ॥ १५८ ॥

तत्काले यजमानस्तु सर्वास्तान् सम्प्रणाम्य च ।
'अथावनीद'मन्त्रेण मण्डलान्युपलिप्य च ॥ १५९ ॥

'अस्त्वासन'मिति प्रोच्य आसनान्युपलिप्य च ।
प्राङ्मुखानासयित्वा तु कृच्छ्रान्नं भोजयेत्ततः ॥ १६० ॥

पवित्रं वज्रसंयुक्त'मग्निमीले'ति मन्त्रतः ।
ऋत्विजः प्राशयित्वा तु पायसेन घृतेन च ॥ १६१ ॥

'शन्नो दे'वीति मन्त्रेण पश्चादाचमनं ददेत् ।
यजमानश्च तत्काले स्वयं भोजनमाचरेत् ॥ १६२ ॥

तान् पश्चाद्यजमानस्तु तत्तत्कार्ये नियोजयेत् ।
पूर्वोक्तगुणसम्पन्नाश्चत्वारो मूर्तिधारकाः ॥ १६३ ॥

होमेषु षोडश प्रोक्ताः सर्वकर्मसु निश्चलाः ।
एको हौत्रे समुद्दिष्टः एको वै स्नापने तथा ॥ १६४ ॥

अक्षिमोचनकार्यार्थं द्वावत्र वृणुयात्तथा ।
सर्वदेवार्चनार्थन्तु चत्वारस्सम्प्रकीर्तिताः ॥ १६५ ॥

एवमाहृत्य यत्नेन पूजयित्वा पृथक् पृथक् ।
कृत्वा शास्त्रोक्तविधिना भगवन्तमनुस्मरन् ॥ १६६ ॥

ध्यायन्नासीत तद्रात्रौ यजमानस्सदा हरिम् ।
प्रभाते च स धर्मात्मा सूत्रोक्तेन विधानतः ॥ १६७ ॥

स्नात्वा स्नानविधानेन आचार्यः स्थापकैस्सह ।
देवालयं शनैर्गत्वा प्रदक्षिणमथाचरेत् ॥ १६८ ॥

मृष्टसिक्तोपलेपाद्यैः संस्कुर्याद्देवतागृहम् ।
अक्ष्युन्मोचनमुद्दिश्य वास्तुहोमं समाचरेत् ॥ १६९ ॥

## समन्त्रकाक्ष्युन्मेषप्रयोगः

अक्ष्युन्मेषमथो वक्ष्ये कौतुकस्य ध्रुवस्य च ।
कृत्वाऽङ्कुरार्पणं रात्रौ प्रभाते मध्यमेऽहनि ॥ १७० ॥

प्रासादस्योत्तरे पार्श्वे कृते श्रामणकेऽनले ।
आधारं विधिवत्कृत्वा मथितेनैव वह्निना ॥ १७१ ॥

सूत्रोक्तेन विधानेन भूमियज्ञं यजेत्क्रमात् ।
पर्यग्निश्चैव कृत्वा तु बिम्बपार्श्वे विशेषतः ॥ १७२ ॥

पञ्चगव्यैः समभ्युक्ष्य गायत्र्या प्रणवाद्यया ।
स्थानशुद्धि ततः कृत्वा पुण्याहं वाचयेत्क्रमात् ॥ १७३ ॥

## औपासनाग्निकुण्डकल्पनम्

देवालयस्य परितः कुण्डमौपासनं चरेत् ।
स्थण्डिलञ्चोपलिप्यैव वालुकाभिः प्रपूरयेत् ॥ १७४ ॥

द्वात्रिंशदङ्गुलायामं चतुरश्रं समन्ततः ।
षडङ्गुलसमुत्सेधं स्थलं सम्यक् प्रकल्प्य च ॥ १७५ ॥

तत्र मध्येऽवकाशः स्याच्चतुर्विंशतिकाङ्गुलम् ।
अवगाढन्तु तस्यैव भागमात्रमुदाहृतम् ॥ १७६ ॥

तद्बाह्ये बाह्यवेदिस्स्याच्चत्वारिंशद्भिरङ्गुलैः ।
उत्सेधो विस्तरश्चैव भागमात्रं प्रवक्ष्यते ॥ १७७ ॥

ब्रह्मसोमपितृस्थानकल्पनं विधिना चरेत् ।
द्वादशाङ्गुलमायामं चतुरश्रं समन्ततः ॥ १७८ ॥

उत्सेधो भाग उद्दिष्टः ब्रह्मस्थानस्य कारयेत् ।
तस्य पश्चिमभागे तु पितृस्थानं प्रकल्पयेत् ॥ १७९ ॥

द्वादशाङ्गुलमायाममुन्नतं गोलकं भवेत् ।
शूर्पाकारं तु कृत्वा तु दक्षिणाग्रं प्रकल्पयेत् ॥ १८० ॥

उत्तरे सोममुद्दिश्य स्थानं वृत्तं समाचरेत् ।
द्वादशाङ्गुलमायाममुन्नतं गोलक भवेत् ॥ १८१ ॥

वेदिप्रमाणं कर्तव्यं सीवनीक्षतचन्द्रवत् ।
अक्षिमोचनमुद्दिश्य चैवमौपासनं चरेत् ॥ १८२ ॥

## अक्ष्युन्मेषहोमः

आघारं विधिवत्कृत्वा मथितेनैव वह्निना ।
अङ्गहोमञ्च हुत्वा तु कापिलेन घृतेन वै ॥ १८३ ॥

तदलाभेऽन्यगव्येन माहिषाजाविकं विना ।
मूर्धादि पादपर्यन्तमङ्गं प्रत्येकमुच्चरन् ॥ १८४ ॥

स्वाहान्तं योजयित्वा तु देवेशं मनसा स्मरन् ।
विष्णुसूक्तञ्च जुहुयाद्व्याहृत्यन्तमतः परम् ॥ १८५ ॥

सुपुष्टाङ्गां सवत्साञ्च गामेकां स्थापयेत्पुरः ।
तिलराशिं तथा धान्यराशिं सम्भृत्य भक्तितः ॥ १८६ ॥

देवस्याभिमुखे कृत्वा पश्चाद्वर्णं प्रगृह्य च ।
सुवर्णेन कृतेनैव पात्रे तूलिकयाऽन्विते ॥ १८७ ॥

देवस्य दक्षिणे पार्श्वे उत्तराभिमुखः स्थितः ।
पटप्रच्छादनं कृत्वा ध्यायन् षण्मण्डलाधिपान् ॥ १८८ ॥

पक्ष्म वर्म तथा रक्तशुक्लकृष्णानि चिन्तयन् ।
तथा ज्योतिर्मण्डलञ्च यानि षण्मण्डलानि वै ॥ १८९ ॥

पृथिव्यापस्तथा तेजो वायुराकाश इत्यपि ।
परमात्मेति च ज्ञेया ये ते षण्मण्डलाधिपाः ॥ १९० ॥

विष्णुसूक्तं गुरुर्जप्त्वा अक्ष्युन्मोचनमारभेत् ।
वैष्णवं सूक्तमुच्चार्य ज्योतिर्मण्डलमाचरेत् ॥ १९१ ॥

'श्रिये जाते'ति मन्त्रेण श्रीदेव्याश्चाक्षिमोचनम् ।
मेदिनी मन्त्रमुच्चार्य मेदिन्याश्चाक्षिमोचनम् ॥ १९२ ॥

तत्तन्मन्त्रं समुच्चार्य परिवाराक्षिमोचनम् ।
प्रतिष्ठोक्तदिनात्पूर्वं द्वितीये वा समाहितः ॥ १९३ ॥

आचार्यो मन्त्रसंयुक्तमाचरेदक्षिमोचनम् ।
पश्चादग्नि विसृज्यैव आदित्यं प्रणमेद्बुधः ॥ १९४ ॥

## दर्शनद्रव्यदर्शनम्

प्रच्छन्नपटमाबद्ध्य देवस्याग्रे विशेषतः ।
सौवर्णादिषु पात्रेषु घृतं मधु तथा दधि ॥ १९५ ॥

क्षीरञ्च पृथगाहृत्य प्रत्येकं प्रस्थसम्मितम् ।
द्रव्याणि दर्शनीयानि देवस्याग्रे विनिक्षिपेत् ॥ १९६ ॥

अष्टौ धान्यानि च पृथक् राशीः कृत्वाऽग्रतः पृथक् ।
पटमुत्सार्य काले तु जयशब्दसमन्वितम् ॥ १९७ ॥

वाद्यघोषसमायुक्तं देवेशं सम्प्रणम्य च ।
दर्शयेद्देवदेवस्य द्रव्यं द्रव्यं समाहितः ॥ १९८ ॥

जप्त्वा गोदानसूक्तन्तु सवत्सां कांस्यदोहनाम् ।
स्वर्णशृङ्गां रौप्यखुरां सवस्त्रां गां प्रदर्शयेत् ॥ १९९ ॥

आचार्य पूजयित्वा तु वस्त्राभरणकुण्डलैः ।
शिष्यांश्च पूजयेत्तद्वद्वस्त्रयुग्माङ्गुलीयकैः ॥ २०० ॥

हिरण्यपशुभूम्यादि गुरवे दक्षिणां ददेत् ।
ब्रह्मणान् भोजयित्वा तु तर्पयेद्दक्षिणादिभिः ॥ २०१ ॥

## वास्तुहोमः – (वास्तुपुरुषलक्षणम्)

प्रतिष्ठोक्तदिनात्पूर्व द्वितीये वा तृतीयके ।
आलयस्योत्तरे पार्श्वे वास्तुहोम उदीरितः ॥ २०२ ॥

(वास्तुहोमप्रसङ्गे तु वास्तुपूरुष उच्यते) ।
कल्पयेद्वास्तुपुरुषं दशतालेन मानतः ॥ २०३ ॥

आलये गोपुरे चैव मण्डपे चाङ्कणेऽपि वा ।
यावान् विस्तार उद्दिष्टः तावांस्तस्याङ्गमुच्यते ॥ २०४ ॥

द्वौ वास्तुपुरुषौ ज्ञेयौ चलाचलविभेदतः ।
प्राक्च्छिरोऽधोमुखो मुख्यः भूमिस्थस्स तु सर्वदा॥ २०५ ॥

स स्थाणू रुद्रदेहात्मा शर्व इत्यभिधीयते ।
तस्योपरि च यश्शेते चलस्सर्वप्रभुर्वरः ॥ २०६ ॥

मध्याह्ने प्राक्च्छिराश्शेते स सायं दक्षिणाशिराः ।
निश्यर्धे पश्चिमशिराः प्रातरुत्तरदिक्च्छिराः ॥ २०७ ॥

सदाऽम्बरमुखो भूत्वा सङ्क्रमेत्सङ्क्रमक्रमात् ।
एवं विज्ञाय मनसा वास्तुहोमं समाचरेत् ॥ २०८ ॥

आलयस्योत्तरे कुर्याद्वास्तुकुण्डं विचक्षणः ।
मण्डपे मध्यमे कुर्याद्गोपुरे च तथैव च ॥ २०९ ॥

प्रासादस्योत्तरे कुर्यात् स्थण्डिलं चतुरश्रकम् ।
गोमयेनोपलिप्यैव वर्णालङ्करणं चरेत् ॥ २१० ॥

वास्तुपूरुषरूपन्तु कल्पयित्वा विचक्षणः ।
कुण्डं श्रामणकं तस्य पूर्वोक्तेन विधानतः ॥ २११ ॥

कुक्षिप्रदेशे कुर्वीत धनधान्यविवृद्धये ।
बाहुप्रदेशे कुर्वीत पुत्रपौत्राभिवृद्धये ॥ २१२ ॥

नाभेरधः प्रदेशे तु वास्तुकुण्डं न कारयेत् ।
कुण्डमेवं कल्पयित्वा साधितेनैव चाग्निना ॥ २१३ ॥

आघारं विधिवत्कृत्वा अदितेन्वादिभिः क्रमात् ।
परिस्तीर्य तु मन्त्रज्ञः पश्चादग्निं प्रणम्य च ॥ २१४ ॥

समिद्भिर्मूलमध्याग्रघृताक्ताभिर्यजेत्ततः ।
'भूमियज्ञाय स्वाहे'ति 'यज्ञदेवे'ति च क्रमात् ॥ २१५ ॥

'मेदिनी-देवी'-'समुद्रेति-शृङ्गे-वायुपरी'ति च ।
व्याहृत्यन्तञ्च हुत्वा तु उल्कया चाग्निमाहरेत् ॥ २१६ ॥

'अहमग्नेऽग्निमि'त्युक्त्वा मूलबिम्बस्य पार्श्वतः ।
गर्भालये च सर्वत्र तथा चैवार्धमण्डपे ॥ २१७ ॥

स्नपनालये च कुर्वीत गोपुरे च तथैव च ।
प्राकारादिषु सर्वत्र प्रादक्षिण्यक्रमेण वै ॥ २१८ ॥

दर्शयित्वा विधानज्ञः पश्चादग्निं विसर्जयेत् ।
पञ्चगव्यं समादाय मृत्पात्रे तु विशेषतः ॥ २१९ ॥

प्रोक्षयेत्कुशकूर्चेन 'अणोरणीया'निति मन्त्रतः ।
मूलबिम्बस्य परितः दर्शयित्वा च सर्वशः ॥ २२० ॥

पुनः कृत्वा तु पुण्याहं तत्र प्रोक्षणमाचरेत् ।
पश्चादग्निं समासाद्य परिस्तीर्य च पावकम् ॥ २२१ ॥

'ये ते शत-मुदुत्तम-मयाश्चाग्ने'ति च क्रमात् ।
'आपस्सृजन्तु'ति चत्वारो हूयन्ते वारुणाः स्मृताः ॥ २२२ ॥

‘विश्वेदेवस्य’ इत्युक्त्वा ‘विश्वे अद्य’ ततः परम् ।
वैश्वदेवञ्च हुत्वा तु वैष्णवञ्च सुहूयताम् ॥ २२३ ॥

‘अतो देवा-इद विष्णुः-त्रीणि पदा विचक्रमे ।
विष्णोः कर्माणि-तद्विष्णोः-तद्वि प्रास’ इति ब्रुवन् ॥ २२४ ॥

‘रुद्रमन्यञ्च’ हुत्वा तु ‘त्र्यम्बक’ञ्च ततः परम् ।
‘ब्रह्मजज्ञान’मित्युक्त्वा ‘हिरण्यगर्भ’ इति ब्रुवन् ॥ २२५ ॥

‘मिश्रवासस’ इत्युक्त्वा ‘युवमेतानि’ हूयताम् ।
‘अग्नीषोमविमं’ प्रोच्य ‘आन्यं दिव’ इतीरयन् ॥ २२६ ॥

हुत्वा ‘बृहस्पति’रिति ‘बृहस्पतिस्सोम’मित्यपि ।
‘बृहस्पते अतियदि’ति ‘उपायमे’ति हूयताम् ॥ २२७ ॥

‘त्रातारादी’स्ततो हुत्वा ऐन्द्रमन्त्रांस्त्रयोदश ।
‘यमो दाधार-नमस्ते’ति यममन्त्रौ हुनेत्तथा ॥ २२८ ॥

‘मित्रस्य चर्षणी’ति ‘मित्रो जना’निति ब्रुवन् ।
‘प्रसमित्रे’ति हुत्वा तु व्याहृत्यन्तं पृथक् पृथक् ॥ २२९ ॥

एवं हुत्वा विधानेन अन्ततः परिषेचयेत् ।

## विमानाङ्गहोमः

विमानञ्चेन्नवं तत्र विमानाङ्गाहुतीर्यजेत् ॥ २३० ॥

उपानाय जगत्यै च कुमुदायेति हूयताम् ।
वल्लिकायै च हुत्वा तु खण्डायेति ततः परम् ॥ २३१ ॥

पट्टिकायै ततो हुत्वा ताटिकायै ततः परम् ।
कर्कर्यै चैव हुत्वा तु कुम्भायेति ततः परम् ॥ २३२ ॥

फलकायै च हुत्वा तु कपोताय ततः परम् ।
ग्रीवाया इति हुत्वा तु स्कन्धग्रीवाय इत्यपि ॥ २३३ ॥

स्थूपिकायै च हुत्वा तु व्याहृत्यन्तं पृथक् पृथक् ।
जयादीनपि हुत्वा तु विष्णुसूक्तं हुनेत्ततः ॥ २३४ ॥

वास्त्वग्नौ वास्तुहोमञ्च जुहुयात्तत्र तत्र तु ।
अन्तहोमं ततो हुत्वा आदित्यं प्रणमेत्क्रमात् ॥ २३५ ॥

## अग्न्यायतनम्–कुण्डलक्षणम्

अत ऊर्ध्वं प्रवक्ष्यामि अग्न्यायतनलक्षणम् ।
शय्यास्थानस्य पूर्वे तु कुण्डं श्रामणकं चरेत् ॥ २३६ ॥

पूर्वोक्तेन विधानेन ऐन्द्रे चौपासनं चरेत् ।
धनुराकृतिकं कुर्याद्याम्ये बेदिद्वयान्वितम् ॥ २३७ ॥

त्रिशदङ्गुलसम्भ्रान्त्या कृते वृत्तेऽर्धभाजिते ।
अवाचीनेन चार्धेन कल्पितो धनुराकृतिः ॥ १३८ ॥

अन्वाहार्याग्निरुदितः क्षेत्रमौपासनाग्निवत् ।
उत्सेधं विस्तृतिश्चैव भागं वेद्याः समाचरेत् ॥ १३९ ॥

ब्रह्मसोमपितृस्थानान्याहरेदुक्तमार्गतः ।
द्वादशाङ्गुलमायामः उन्नतं भाग उच्यते ॥ २४० ॥

अन्तरं भाग उद्दिष्टः पैतृकं गोलकं चरेत् ।
पश्चिमे वृत्तकुण्डः स्याद्वेदिद्वयसमन्वितः ॥ २४१ ॥

अथाष्टादशभिः सार्धैरङ्गुलैश्च भ्रमीकृते ।
वृत्ते तदूर्ध्ववेदिस्स्यात् वृत्तकुण्डस्य मानतः ॥ २४२ ॥

मूर्धानं नाभिमङ्घ्री च क्रमाद्देवस्य संस्पृशेत् ।
'यकार' पादयोस्तद्व'दकार' हृदये न्यसेत् ॥ १३१ ॥

प्रणवेन वेष्टयित्वा तु विष्णुशक्ति विचिन्तयेत् ।
'भूः प्रपद्य' इति प्रोक्त्वा देवदेवमनुस्मरन् ॥ १३२ ॥

निष्कलं ध्यानयोगेन ध्यात्वा सकलमव्ययम् ।
सङ्कल्प्य शक्ति देवस्य प्रणिध्या विनिवेशयेत् ॥ १३३ ॥

पात्रस्थ शक्तियुक्तं तत्कूर्चेनादाय वै जलम् ।
प्राणबुद्ध्या कौतुकस्य मूर्ध्नि संस्रावयेद्बुध· ॥ १३४ ॥

विष्णुञ्च पुरुषं सत्यमच्युतञ्चानिरुद्धकम् ।
पञ्चमूर्तीस्समावाह्य दक्षिणे श्रियमेव च ॥ १३५ ॥

वामे मही समावाह्य तत्तन्मूर्तीस्समर्चयेत् ।

## अर्चनक्रमः

'अस्त्वासन' समुच्चार्य चासन परिकल्पयेत् ॥ १३६ ॥

'विश्वाधिकाना'मुच्चार्य स्वागतं सम्यगाचरेत् ।
'मनोऽभिमन्ते'न्त्युक्त्वा तु देवेशमनुमान्य च ।
'त्वं स्त्रीति' च समुच्चार्य पाद्य तत्राभिमृश्य च ॥ १३७ ॥

'इन्द्रोऽभिम'न्तेत्युच्चार्य पाद्य दद्याच्छ्रियःपतेः ।
'शन्नो देवीति' मन्त्रेण दद्यादाचमनं हरेः ॥ १३८ ॥

'आपो हिष्ठे'ति पुरुषाय दद्यादाचमनीयकम् ।
'इमास्सुमनस' इत्युक्त्वा पुष्पाणि च समर्पयेत् ॥ १३९ ॥

'योगे योगे'ति सत्याय 'समाने'त्यच्युताय च ।
'पवित्रन्ते'ऽनिरुद्धाय दद्यादाचमनीयकम् ॥ १४० ॥

'इमास्सुमनस' इत्युक्त्वा पुष्पं देवस्य दीयताम् ।
पुष्पमालास्समादाय चालङ्कुर्यान्मनोरमम् ॥ १४१ ॥

'इमे गन्धा' इति गन्धञ्च नाभेरूर्ध्व प्रलेपयेत् ।
'बृहस्पती'ति चोक्त्वा तु धूपं दद्याच्चतुर्दिशम् ॥ १४२ ॥

'शुभ्राज्योतिरि'ति प्रोच्य दीपं देवस्य दर्शयेत् ।
'अग्निरिन्द्रा'दिना विद्वानर्घ्यं तत्रभिमर्शयेत् ॥ १४३ ॥

'इन्द्रियाणी'ति मन्त्रेण विष्णवेऽर्घ्य निवेदयेत् ।
'हिरण्यगर्भ' इत्युक्त्वा पुरुषाय निवेदयेत् ॥ १४४ ॥

'इदमापश्शिवे'त्युक्त्वा सत्यायार्घ्यं निवेदयेत् ।
अच्युताय ततो दद्या'त्तत्पुरुषाय'मन्त्रतः ॥ १४५ ॥

'कयानश्चित्र' इत्युक्त्वा अनिरुद्धाय दीयताम् ।
पूर्वमुक्तेन मन्त्रेण दद्यादाचमनीयकम् ॥ १४६ ॥

'इषे त्वोर्जेत्वे'ति जपन् मन्त्रेण स्नानमाचरेत् ।
कूर्चेन तोयमादाय प्रोक्षयेद्बिम्बमत्वरः ॥ १४७ ॥

'मित्रस्सुपर्ण' इत्युक्त्वा प्लोतेन विमृजेत्ततः ।
'तेजो वत्सव' इत्युक्त्वा वस्त्रं देवस्य दीयताम् ॥ १४८ ॥

'सोमस्य तनूर'सीत्युक्त्वा उत्तरीयं ददेद्बुधः ।
'भूतो भूतेष्वि'ति जपन् भूषणानि समर्पयेत् ॥ १४९ ॥

पुनः पाद्यादिकं दत्वा मन्त्रैः पूर्वमुदीरितैः ।
उपवीत'मग्नि दूते'ति दद्याद्देवस्य चादरात् ॥ १५० ॥

दीपान्तमर्चयित्वा तु देवमानम्य चादरात् ।
एवं कौतुकमभ्यर्च्य पश्चादौत्सवमर्चयेत् ॥ १५१ ॥

स्नापनं बलिबेरञ्च पश्चादभ्यर्चयेद्बुधः ।

## भोज्यासनम्

'अथावनीद' मन्त्रेण मण्डलान्युपलिप्य च ॥ १५२ ॥

ततः पात्रं समादाय 'आ मा वाजस्य' चोच्चरन् ।
तत्राऽदित्यं समभ्यर्च्य पुनः पात्राणि शोधयेत् ॥ १५३ ॥

शोधयेच्च तथा नित्यं हविःपात्राणि मन्त्रतः ।
अभिघार्य हविःपात्रं 'देवस्येति' समुच्चरन् ॥ १५४ ॥

'अमृतोपस्तरण'मिति हविः प्रक्षिप्य चात्वरः ।
सर्वोपदशसयुक्त सफलं व्यञ्जनैर्युतम् ॥ १५५ ॥

गुडखण्डसमायुक्तमन्यै· देवार्पणोचितैः ।
भक्तियुक्तं गृहीत्वा तु तुलसी तेषु निक्षिपेत् ॥ १५६ ॥

अन्नसूक्तेनाभिमृश्य समाहितमनास्तदा ।
'यत्ते सुसीम' इत्युक्त्वा घृतमास्राव्य कापिलम् ॥ १५७ ॥

(अलाभे गव्यमन्यद्वा वर्जयित्वा च माहिषम् ।
वर्ज्यमाजं माहिषं वा क्षीर दद्ध्यादिकं तथा) ॥ १५८ ॥

शुद्धोदैः प्रोक्षयित्वा तु देवेशाय निवेदयेत् ।
'सुभूस्स्वय भू'रित्युक्त्वा विष्णवे स्यान्निवेदनम्॥ १५९ ॥

'हिरण्यगर्भ' इत्युक्त्वा पुरुषाय च पायसम् ।
'इह पुष्टि' समुच्चार्य सत्याय कृसरं ददेत् ॥ १६० ॥

‘समा ववर्ती’त्युच्चार्य गौल्यञ्चैवाच्युताय च ।
‘त्रीणि पदे’ति चोच्चार्य अनिरुद्धाय यावकम् ॥ १६१ ॥

एतान् मन्त्रात्समुच्चार्य पञ्चमूर्तिनिवेदनम् ।
देवीभ्याञ्च मुनिभ्याञ्च दद्यादेव क्रमेण ह ॥ १६२ ॥

## होमः

ततश्चाग्नि परिस्तीर्य नित्यहोम समाचरेत् ।
विमानदक्षिणे क्लृप्ते यागशालासुरक्षितम् ॥ १६३ ॥

सभ्यमौपासनं वाऽग्निमासाद्योज्ज्वाल्य मन्त्रतः ।
गन्धपुष्पैरक्षताद्यैरलङ्कृत्य विशेषतः ॥ १६४ ॥

परिषिच्याद्भिरग्नौ तु वैष्णवान्तं चरुं यजेत् ।
आज्येन मूर्तिमन्त्रैस्तु देवेशाय तथा हुनेत् ॥ १६५ ॥

देवीभ्याञ्चालयगतदेवेभ्योऽन्येभ्य एव च ।
उपास्थायाग्निमादित्यञ्चालयं समुपाव्रजेत् ॥ १६६ ॥

अतो देवादिना दद्यात् पानीय हरये तदा ।
शिष्यमाहूय तत्काले बलिमानाय्य मन्त्रतः ॥ १६७ ॥

## बलिदानम्

पुष्पगन्धसमायुक्त धूपदीपसमन्वितम् ।
वाद्यध्वनिसमायुक्तं तीर्थयुक्तं गुरुर्व्रजेत् ॥ १६८ ॥

पुरतः कूर्चयुक्तेन वारिणा बलिमर्पितुम् ।
पश्चात् शिष्यो बलिं दद्याद्गुरूद्दिष्टेन वै यथा ॥ १६९ ॥

बलिदाने क्रमः प्रोक्तो यस्तमाश्रित्य कारयेत् ।
प्रथमद्वारपालेभ्यो मूर्तिमन्त्रैरुपक्रमेत् ॥ १७० ॥

पश्चाद्विमानपालेभ्यः तत्तद्दिशि बलि ददेत् ।
इन्द्रादिलोकपालानां ततः पश्चात् बलि क्षिपेत् ॥ १७१ ॥

तोय तद्वा तु प्रथमं दद्यात् पुष्पं ततः परम् ।
गन्ध पश्चात् ततो धूप दद्याद्दीप ततः परम् ॥ १७२ ॥

बलं पश्चात् क्षिपेत्तत्र दद्यात् तोय ततः परम् ।
बलिशेषं समादाय भूतपीठे विनिक्षिपेत् ॥ १७३ ॥

पादौ प्रक्षाल्य चाचम्य प्रविशेद्देवमन्दिरम् ।
भूतपीठादिपीठानि शिष्यस्तोयेन शोधयेत् ॥ १७४ ॥

स्थलशुद्धि कारयित्वा पश्चादाचमनं ददेत् ।

## मुखवासः

एलालवङ्गतक्कोलकर्पूराद्यैरनुत्तमैः ॥ १७५ ॥

'घृतात्परीति' चोक्त्वा तु मुखवासं निवेदयेत् ।
पञ्चप्रकारैः प्रणमेत् देवदेव समीक्ष्य वै ॥ १७६ ॥

उपचारार्पण यत्र घण्टानादं समाचरेत् ।
नमस्कारश्च विहित· प्रतिद्रव्यं समर्पणे ॥ १७७ ॥

## अन्नबलिविधिः

पश्चादन्नबलेः कल्पः विशेषेण प्रवक्ष्यते ।
बलिविध्युक्तमार्गेण नित्यं यात्राबलि ददेत् ॥ १७८ ॥

बलिपात्रं समादाय शोधयेच्छुद्धवारिणा ।
बलिपात्रे शुचौ तस्मिन् समावाह्य न भास्करम् ॥ १७९ ॥

बल्यन्न तत्र निक्षिप्य उक्तरूपं मनोहरम् ।
देवस्य पुरतो न्यस्य तस्मिन् देवेशमर्चयेत् ॥ १८० ॥

शिष्यं सोपानग स्थाप्य तत्रावाह्य खगाधिपम् ।
गरुडध्यानसंयुक्तं 'बृहस्पति'रिति ब्रुवन् ॥ १८१ ॥

बलिपात्रं समानाय्य शिष्यस्य शिरसि न्यसेत् ।
प्रदक्षिणं ततो गत्वा आलयं परितः क्रमात् ॥ १८२ ॥

मृदुवाद्यसमायुक्त वेदध्वनिसमन्वितम् ।
धूपदीपसमायुक्तं छत्रचामरसंयुतम् ॥ १८३ ॥

मयूरव्यजनैश्चापि बर्हिपिच्छैः समायुतम् ।
अन्यैर्यथालाभलब्धैः कुर्याद्धामप्रदक्षिणम् ॥ १८४ ॥

गोपुरात्तु बहिर्गत्वा वेदध्वनिसमायुतम् ।
सर्ववाद्यसमायुक्तं स्तोत्रध्वनिसमायुतम् ॥ १८५ ॥

द्वितीयावरणेऽप्येवं तृतीयावरणे तथा ।
प्रदक्षिणं शनैर्गत्वा भूतपीठ परीत्य च ॥ १८६ ॥

ततोऽभ्यन्तरमाविश्य मृदुवाद्यसमन्वितम् ।
वीशस्य पश्चिमे स्थित्वा देवमीक्षेत चादृतः ॥ १८७ ॥

घटदीप समानीय पाद्यमाचमनं ददेत् ।
वेश्या तद्दीपमादाय सर्ववाद्यसमायुतम् ॥ १८८ ॥

देवेशं त्रिः परिक्रम्य उपचारक्रमं चरेत् ।
शिष्यो बल्यग्रमादाय विष्वक्सेनाय दापयेत् ॥ १८९ ॥

बलि शिष्टं समादाय भूतपीठे च निक्षिपेत् ।
पादौ प्रक्षाल्य चाचम्य देवागारं विशेद्गुरुः ॥ १९० ॥

देवस्याभिमुखे स्थित्वा पूजकः सम्प्रणम्य च ।
जपेत्पुरुषसूक्तञ्च विष्णुसूक्तमथापि वा ॥ १९१ ॥

'अतो देवादि' मन्त्रान्वा द्वादशाक्षरमेव वा ।
जप्त्वा तु देवं प्रणमेत्स्मरन् देवं मुहुर्मुहुः ।
प्रातरेवं समभ्यर्च्य सूर्योपस्थानमाचरेत् ॥ १९२ ॥

## मध्याह्नार्चनम्

अत ऊर्ध्व प्रवक्ष्यामि मध्याह्ने चार्चन क्रमात् ।
स्नात्वा स्नानविधानेन सूक्तानि च जपेत्क्रमात् ॥ १९३ ॥

देवालय शनैर्गत्वा प्रदक्षिणमथाऽचरेत् ।
पूर्वोक्तेनैव मन्त्रेण कवाटोद्घाटनं चरेत् ॥ १९४ ॥

अभ्यन्तरं प्रविश्यैव देवमानम्य पूर्ववत् ।
शिष्यमाहूय तत्काले द्रव्याण्यपि च सम्भरेत् ॥ १९५ ॥

पूर्वोक्तेन विधानेन पुष्पन्यासं समाचरेत् ।
कौतुके च तथा कुर्याच्छिवादीनाञ्च पूजनम् ॥ १९६ ॥

पाद्याद्यर्घ्यान्तमेवं स्यात् त्रिषु कालेषु पूजनम् ।
उपर्युपरि पुष्पाणि त्रिषु कालेषु सन्न्यसेत् ॥ १९७ ॥

अतीतेऽहनि रात्रौ च पुष्पं निर्माल्यतामियात् ।
तस्मात्सदा प्रातरेव निर्माल्यपरिशोधनम् ॥ १९८ ॥

मालानामितरेषाञ्च तत्तत्काले विसर्जनम् ।
(उत्सवेष्वन्यकालेषु मालाश्चान्यास्समर्पयेत्)
धात्रादीनर्चयित्वा तु पाद्याद्यर्घ्यान्तमेव च ॥ १९९ ॥

देवदेवेशमाराध्य पाद्याद्यैश्च विधानतः ।
पूर्वोक्तेन विधानेन हविर्भिस्सन्निवेदयेत् ॥ २०० ॥

स्नानादीन् विग्रहान् हित्वा पूजनं दशभिस्त्रिभिः ।

## सायमर्चनम्

सायञ्चैव तथा कुर्यान्नित्यमेवन्तु पूजनम् ॥ २०१ ॥

अर्धरात्रे तु पाद्यादि दत्वा दीपान्तमेव च ।
पूर्वोक्तेन विधानेन हविर्भिस्सन्निवेदयेत् ॥ २०२ ॥

ततश्चाचमन दत्वा मुखवास निवेदयेत् ।
पूर्वोक्तेन क्रमेणैव द्वारसङ्घट्टनं चरेत् ॥ २०३ ॥

(Chapter 20)

*****

# VII

The following excerpts are from another important *Vaikhānasāgama* text, Atri's *Samūrtārchanādhikaraṇa* (edited by Raghunātha Chakravarti, T.T.D., Tirupati, (1943), and they deal with the characteristics of the worshipful icons and matters relating to the rituals of worship of Fires.

## (1)

## KAUTUKA IMAGE

अथात· कौतुकादीनां लक्षणं संप्रवक्ष्यते ।
अर्चा च कौतुक प्राणो वर एकार्थवाचकाः ॥ १ ॥

अर्च्यत्वाज्जलपुष्पाद्यैः कीर्तितार्चेति सूरिभिः ।
सर्वमङ्गलकारित्वात्कौतुक ह्यभिधीयते ॥ २ ॥

सर्वेषां प्राणभूतत्वात् प्राण इत्युच्यते बुधैः ।
श्रीभूदेव्योर्वरत्वाच्च वर इत्यपि कीर्तित· ॥ ३ ॥

कौतुक स्नापनं बिम्बमौत्सवं त्रीणि कारयेत् ।
दारुः शिला च ताम्र च रजतं रुक्ममित्यपि ॥ ४ ॥

उक्तानि कौतुकादीनां द्रव्याणीमानि पञ्च च ।
दारवाच्छैलज श्रेष्ठं शैलजात्ताम्रजं वरम् ॥ ५ ॥

ताम्रजाद्राजतं श्रेष्ठ राजताद्रुक्मज वरम् ।
दारवाच्छैलजार्च्चायाः फलं शतगुणं भवेत् ॥ ६ ॥

शैलजात्ताम्रजे बिम्बे सहस्रमधिकं फलम् ।
ताम्रजाद्राजते बिम्बे त्वयुत फलमुच्यते ॥ ७ ॥

राजताद्रुक्मजार्चायामनन्त कथ्यते फलम् ।
रुक्माभो रुक्मगर्भश्च देवो रुक्ममयो हरिः ॥ ८ ॥

सर्वस्य साधन तस्मात्प्रिय चाप्यविनाशि तत् ।
बहुना कि प्रलापेन रुक्म त्रिष्णुरिति स्मृतम् ॥ ९ ॥

अयसा त्रपुणा कास्यरीतिकासीसकैर्बुधः ।
न कुर्याद्दिवतारूप कुर्याच्चेदाभिचारिकम् ॥ १० ॥

चक्रादीनयसा वापि कारयेदायुधान् बुध· ।
ध्रुवबेरस्य मान यत् त्रिभाग कारयेच्च तत् ॥ ११ ॥

तस्यैकभागमान तु कौतुक चोत्तम भवेत् ।
स्नपनं च तथा बिम्बमुत्सव च तथैव च ॥ १२ ॥

व्यक्तं सर्वाङ्गसपूर्ण सर्वाभरणसयुतम् ।
सौन्दर्येण समायुक्त लक्षणेन समन्वितम् ॥ १३ ॥

शिल्पशास्त्रोक्तमार्गेण शिल्पिभिः कारयेद्बुधः ।
ध्रुवबेरं नवांश तत्कृत्वैकाशं व्यपोह्य च ॥ १४ ॥

शेषाश त द्विधा कुर्यादेकभागेन संमितम् ।
उत्तम मध्यम चैव तत्कौतुकमुदाहृतम् ॥ १५ ॥

एवमेव यथान्यायमेकोनं तत्त्रिधा कृते ।
तत्रैकभागेन मित कौतुकं स्यात्क्रमेण वै ॥ १६ ॥

उत्तमादधम चापि मध्यमादुत्तम तथा ।
मध्यमान्मध्यम चापि मध्यमादधम तथा· ॥ १७ ॥

अधमादुत्तम तद्वदधम मध्यम तथा ।
ध्रुवबेरं नवाश तत्कृत्वैकाशेन कौतुकम् ॥ १८ ॥

अधमाधममित्युक्त यथाशक्त्या तु कारयेत् ।
शिलया दारुणा बिम्बमौत्सव न विधीयते ॥ १९ ॥

श्रीभूम्यावपि ते देव्यौ कारयेत विधानतः ।
देवस्य बाहुमान तद्देव्योर्मानमुदाहृतम् ॥ २० ॥

तद्द्रव्येण तथा देव्यौ कौतुकस्य तु कारयेत् ।
स्थानके कौतुके देव्यौ स्थानके कारयेत्तथा ॥ २१ ॥

आसीने चासने देव्यौ सहैव पृथगेव वा ।
ध्रुवबेरानुरूप तु कौतुक कारयेत्तथा ॥ २२ ॥

ध्रुवे स्थिते स्थित्त कुर्याद्बिम्बं तत्कौतुक तथा ।
आसीने चासन वापि स्थानकं वा विधानतः ॥ २३ ॥

ध्रुवबेरे शयानेऽपि शयनं प्रतिषिध्यते ।
शयने चासने वापि स्थानकं वा समाचरेत् ॥ २४ ॥

ध्रुवे स्थिते समासीन कोतुक नैव कारयेत् ।
आसीने कौतुके वापि स्थित वाप्यौत्सवं भवेत् ॥ २५ ॥

विधिना कौतुकं बिम्बमौत्सवं स्नपन तथा ।
तानि त्रीण्यपि बिम्बानि कारयेत प्रयत्नतः ॥ २६ ॥

कौतुकेन च तुल्यं तदौत्सव स्नपनं भवेत् ।
ध्रुवबेरानुरूपं तु कौतुक त्विति शासनम् ॥ २७ ॥

यथोचितानि बिम्बानि तथान्यानीति केचन ।
न्यूनाधिकेषु चान्येषु दोषो नास्ति ततो द्विजाः ॥ २८ ॥

बिम्बमानाङ्गुलेनैव द्वादशाङ्गुलमानकम् ।
सर्वेष्वपि च सर्वत्र सामान्यमिति चापरे ॥ २९ ॥

वाराह नारसिहं च रामं कृष्णं तथैव च ।
कारयेत्कौतुक तद्वच्चतुर्भुजमथापि वा ॥ ३० ॥

मत्स्यं कूर्म वराहं च नारसिहं च वामनम् ।
त्रिविक्रम तथा बिम्बमौत्सव नैव कारयेत् ॥ ३१ ॥

विष्णु चतुर्भुज बिम्बमौत्सवं तत्र कारयेत् ।
ध्रुवे त्रिविक्रमे वापि वामने च तथैव च ॥ ३२ ॥

बिम्बं चतुर्भुजं चैव कौतुक स्थितमेव वा ।
बेरायामं त्रिधा कुर्यात्तस्यैकांशः समुच्छ्रयः ॥ ३३ ॥

वृत्त वा चतुरश्र वा पीठं कुर्याद्विधानतः ।
आयामं तत्सम कुर्याद्विस्तारश्च समस्तथा ॥ ३४ ॥

तेनैव तत्प्रभां कुर्याद्विपरीतं न कारयेत् ।
प्रभा त्रियष्टिका कुर्याद्देवदेवस्य शार्ङ्गिणः ॥ ३६ ॥

तद्यष्टीनां च विस्तारश्चैकैक गोलकं भवेत् ।
द्वादशाङ्गुलमानं तत्प्रभाविस्तारमिष्यते ॥ ३७ ॥

देहलब्धाङ्गुलं चेति तदङ्गुलमुदाहृतम् ।
एकयष्टिप्रभामेव श्रीभूम्यादिषु कारयेत् ॥ ३८ ॥

येन कौतुकमुद्दिष्टं तेन पीठं प्रभामपि ।
अन्यथा चेन्महादोषस्तस्मात्तेनैव कारयेत् ॥ ३९ ॥

उपर्युपरियष्टीना रश्मयस्त्रिशतिः स्मृताः ।
तच्छिखायामविस्तार यथासौन्दर्यमेव च ॥ ४० ॥

न श्लिष्टा नैव विरलाश्चोभयत्र समाः स्मृताः ।
ऊर्ध्वाग्रानेव तान् कुर्यात्पार्श्वयोरुभयोरपि ॥ ४१ ॥

दक्षिणे दक्षिणावर्तौ वामहस्तात्तु वामतः ।
इन्द्रचापनिभा यष्ठिशिशखिवद्रश्मिमालिकाः ॥ ४२ ॥

व्यपोह्य मकुटादूर्ध्व चतुरङ्गुलमुन्नतम् ।
भागं भाग व्यपोह्यैव पार्श्वयोश्चक्रशङ्खयोः ॥ ४३ ॥

मधूच्छिष्टेन विधिना कारयेद्युक्तिहेतुभिः ।
अथवा कौतुकादीनि कारयेदेवमेव वै ॥ ४४ ॥

मूलबिम्बस्य चायामं त्रिधाकृत्वैव तस्य च ।
एकभाग व्यपोह्यैव द्विभागं सप्रगृह्य च ॥ ४५ ॥

कारयित्वा प्रभां तत्र सुपीठे योजयेच्छुभाम् ।
अथवा पार्श्वयोः शङ्कू योजयेत्तत्प्रभा तथा ॥ ४६ ॥

पीठस्य पार्श्वयोर्बाह्ये यन्त्रस्य सुषिरं धृतम् ।
तद् द्विभागं त्रिधा कृत्वा समस्तं चोत्तम भवेत् ॥ ४७ ॥

द्विभागं मध्यमं प्रोक्तमेकभाग तथाधमम् ।
तथैककं त्रिधाकुर्यान्नवधेति च केचन ॥ ४८ ॥

सामान्यप्रतिमां कुर्वन्नेवमेव विधानतः ।
द्वादशाङ्गुलमान वा बिम्बानामङ्गुलेन वा ॥ ४९ ॥

अष्टादशाङ्गुल वापि विशत्यङ्गुलमेव वा ।
अधमं मध्यमं श्रेष्ठं कैश्चित्सामान्यमुच्यते ॥ ५० ॥

षडङ्गुलविहीन वै बिम्ब नैव च कारयेत् ।
षडङ्गुलाधिकं बिम्बं सर्वलोकशुभप्रदम् ॥ ५१ ॥

अथ सामान्यबिम्ब तद्यद्बिम्बं लौकिक तथा ।
द्वे बिम्बे कारयेदेवमिति केचिद्वदन्ति च ॥ ५२ ॥

आहृत्याष्टभिरुन्मानमर्हे भक्तावशेषिते ।
एतदायमिति प्रोक्तं तेन युक्त तु वृद्धिदम् ॥ ५३ ॥

बृहन्मान समाहृत्य हृत्या तु दशभिः पुनः ।
शिष्टमेतद्व्ययं प्रोक्तं व्ययत्वेन धनं भवेत् ॥ ५४ ॥

उन्मानमग्रमाहृत्य भक्त्या तद्वसुभिः पुनः ।
शिष्टं योनिरिति प्रोक्तः शुभं योनौ तु वृद्धये ॥ ५५ ॥

ध्वजो धूमश्च सिहश्च श्वा वृषो गर्दभो गजः ।
काकश्चेत्यष्ट संप्रोक्ता योनयस्तदनुक्रमात् ॥ ५६ ॥

पूर्व पूर्व शुभं प्रोक्तमपर त्वशुभं तथा ।
वर्धतेऽष्टभिरुन्माने सप्तविशतिभाजिते ॥ ५७ ॥

भक्तव्यय च तच्छिष्टे नक्षत्रमिति चोच्यते ।
यजमानानुकूलं च यद्दिनं तत्समाहरेत् ॥ ५८ ॥

वर्धतेऽष्टभिरुन्माने त्रिशता तद्विभाजिते ।
शिष्टं तिथिरिति प्रोक्तं प्रथमादिक्रमेण च ॥ ५९ ॥

हृत्वा नवभिरुन्मान सप्तभिस्तद्विभाजिते ।
शिष्टं वारमिति प्रोक्त शुभवारं समाहरेत् ॥ ६० ॥

हृत्वा चतुर्भिरुन्मानं भाजिते कर्मभिः पुनः ।
तच्छिष्टमंशकं प्रोक्तं गृह्णीयादंशक शुभम् ॥ ६१ ॥

सामान्यतो दिने चैव ज्ञेयं तत्र शुभाशुभम् ।
विमानस्थानुरूपं हि ध्रुवबेरं शुभं भवेत् ॥ ६२ ॥

ध्रुवरूपानुरूपं च कौतुकादित्रय स्मृतम् ।
सर्वैरायादधस्तस्य नेष्यते तत्कथचन ॥ ६३ ॥

पश्चात्संस्थापयेद्विद्वान् स्थापनोक्तविधानतः ।
ईप्सितान् लभते कामानिहामुत्र न सशयः ॥ ६४ ॥

(Chapter 24)

****

(2)

## AGNYĀGHĀRA VIDHI

दारुसग्रहमारभ्य यावन्नेत्रनिमीलनम् ।
यथोक्तं बेरसस्कारं कारयेच्छिल्पिना बुधः ॥ १ ॥

शिल्पिस्पर्शविशुद्ध्यर्थमक्ष्युन्मेषादनन्तरम् ।
कुम्भं सूत्रेण वस्त्राभ्यां वेष्टित पूतवारिणा ॥ २ ॥

पूरयित्वाऽथ देवाग्रे शालिराश्युपरि न्यसेत् ।
ब्राह्ममासनमास्थाय कुम्भदक्षिणपार्श्वतः ॥ ३ ॥

शमीपलाशपत्राणि दूर्वाग्राणि शुभानि च ।
अक्षताश्च कुशाग्र च पुण्यपुष्पाणि काञ्चनम् ॥ ४ ॥

वदन्वै विष्णुगायत्री सर्वमेतत्पृथक् क्षिपेत् ।
इषेत्वोर्जेत्यादि जपन्नाप उन्दन्तु चैव हि ॥ ५ ॥

तत्तु तन्तुभिरावेष्ट्य मन्त्रानपि च वैष्णवान् ।
कूर्चेनैव तु तत्तोयमभिमृश्य समाहितः ॥ ६ ॥

तदम्बुना कुशाग्रेण तप्तचामीकरेण च ।
आपो हिरण्यवर्णादिपवमानादिभिस्त्रिभिः ॥ ७ ॥

श नो देवीरभीत्युक्त्वा पुरुषसूक्तैश्च वैष्णवैः ।
शुद्ध्यर्थ प्रोक्षयेद्वेरं पुण्याहमपि वाचयेत् ॥ ८ ॥

एव चित्रप्रतिष्ठाया चित्राभासे च कारयेत् ।
रात्रिहोमं समाप्यैव दिवा वै स्थापयेत्क्रमात् ॥ ९ ॥

वास्तुहोम समुद्दिश्य मन्दिरस्योत्तरे तथा ।
औपासनाग्निकुण्ड च कल्पयेत विधानतः ॥ १० ॥

यद्वा श्रामणकाग्नि च कुर्यादिति च केचन ।
वक्ष्येऽहं यागशालायामग्निकुण्डप्रकल्पनम् ॥ ११ ॥

प्राच्यामाहवनीयं स्यादन्वाहार्य तु दक्षिणे ।
पश्चिमे गार्हपत्य स्यादावसथ्य तथोत्तरे ॥ १२ ॥

मध्ये सभ्य च कर्तव्य शय्यावेद्यास्तु पूर्वतः ।
उत्तरे शयनाद्वाथ कारयेदिति केचन ॥ १३ ॥

पञ्चाग्निलक्षणं चापि तेषां कुण्ड च वक्ष्यते ।
ब्रह्माऽग्निं पञ्चधा सृष्ट्वा पञ्च लोकेष्वकल्पयत् ॥ १४ ॥

स्वर्गे चाहवनीयं तु प्रतिष्ठाप्य ततः परम् ।
तथान्तरिक्षेऽन्वाहार्य द्वितीयं परिकल्प्य च ॥ १५ ॥

भूम्यां च गार्हपत्याग्निं महर्लोके तथैव च ।
आवसथ्यं जनर्लोके सभ्यं चाग्निमकल्पयत् ॥ १६ ॥

चतुरश्रो यतः स्वर्गः कुण्डं चाहवनीयकम् ।
चतुरश्रं समाख्यातं चापवच्चान्तरिक्षकम् ॥ १७ ॥

कृत्वान्वाहार्यस्य रूपं धनुषो रूपवत्ततः ।
आकृतिर्मण्डलाकारा भुवस्तस्मात्तदाकृतिः ॥ १८ ॥

कुण्डं च गार्हपत्यस्य महर्लोकस्त्रिकाश्रकः ।
आवसथ्यस्य तु प्रोक्तं तथा कुण्ड त्रिकाश्रकम् ॥ १९ ॥

चतुरश्रो जनर्लोकः कुण्डं सभ्यं च तादृशम् ।
पौण्डरीकं तपोलोकं पद्माग्नि तु दलैर्युतम् ॥ २० ॥

सभ्यस्य दक्षिणे कार्य पौण्डरीकं क्रमाद्बुधैः ।
आकारं चाप्यथैतेषां तत्तल्लोकसम विदुः ॥ २१ ॥

द्वात्रिंशदङ्गुलायामामूर्ध्ववेदि चतुर्दिशम् ।
चतुरङ्गुलविस्तारां कोलकोत्सेधसयुताम् ॥ २२ ॥

कृत्वा परिगतामेवमधोवेदि च कारयेत् ।
अधोवेद्याः सुमुत्सेधविस्तारौ भागकौ मतौ ॥ २३ ॥

कुण्डमध्ये चतुर्विंशत्यङ्गुलायतविस्तृतम् ।
भागनाह च कुर्वीत चतुरश्र समन्ततः ॥ २४ ॥

निम्नं पञ्चाङ्गुलं वापि षडङ्गुलमथापि वा ।
कुण्डमाहवनीयाग्नेरेवमेव विधानतः ॥ २५ ॥

कुण्डमौपासनस्याग्नेर्ज्ञेयमाहवनीयवत् ।
अङ्गुल्या पञ्चविंशत्या चतुर्भिश्च यवैः सह ॥ २६ ॥

वृत्त भ्राम्यात्तदर्ध तु व्यपोह्योत्तरतः क्रमात् ।
तद्दक्षिणेऽन्वाहार्यस्य कुण्डं कुर्याद्विधानतः ॥ २७ ॥

अष्टादशाङ्गुलं भ्रान्त्वा वृत्तं सपूर्णचन्द्रवत् ।
पश्चिमे गार्हपत्यस्य कुण्ड विद्याद्यथोदितम् ॥ २८ ॥

अष्टाङ्गुलं रसघ्नं तु यवैः षड्भिः समन्वितम् ।
भुजात्त्वेकात् त्रिकोण स्यादात्रसथ्यस्य कुण्डकम् ॥ २९ ॥

भुजास्तिस्रस्तु कुर्वीत दक्षिणोत्तरपश्चिमाः ।
सङ्गताग्रासु सर्वासु तत्त्रिकोण भविष्यति ॥ ३० ॥

भागं तु परितो हित्वा शेषं निम्नं षडङ्गुलम् ।
अधोवेदिं च परितश्चतुरङ्गुलविस्तृताम् ॥ ३१ ॥

एव द्विवेदिसहित कुण्डान्येतानि कल्पयेत् ।
वेद्योर्भागस्तु विस्तारश्चैकैको भाग उन्नतः ॥ ३२ ॥

द्वात्रिशदङ्गुलायामामूर्ध्ववेदि चतुर्दिशम् ।
वेदिस्तु मध्यमा प्रोक्ता द्विचत्वारिंशदङ्गुला ॥ ३३ ॥

पञ्चाशदङ्गुलायामा ह्यधोवेदिः समन्ततः ।
तिसृणामपि वेदीनां विस्तारश्चोच्छ्रयस्तथा ॥ ३४ ॥

प्रतिष्ठाङ्गुलमुद्दिष्टं प्रत्येकं च तथैव च ।
मध्यवेद्यास्तु विस्तारः पञ्चाङ्गुलमिति स्मृतम् ॥ ३५ ॥

कुण्डमध्ये चतुर्विशदङ्गुलायतविस्तृतम् ।
निम्नमष्टाङ्गुलं वापि दशाङ्गुलमथापि वा ॥ ३६ ॥

अग्नेः सभ्यस्य कुण्ड च कुर्यादेवं विधानतः ।
कुण्डं श्रामणकाग्नेश्च कुर्यात्सभ्याग्निकुण्डवत् ॥ ३७ ॥

सभ्याग्निकुण्डवत्सर्व निम्नमर्काङ्गुलं स्मृतम् ।
सभ्याग्निकुण्डादाग्नेय्यां पौण्डरीकं प्रकल्पयेत् ॥ ३८ ॥

द्वादशाङ्गुलमुत्सेध समवृत्त प्रकल्पयेत् ।
अष्टादशभिरध्यर्धैरङ्गुलीभिर्भ्रमीकृतम् ॥ ३९ ॥

वृत्त तदूर्ध्ववेदि स्यात्पौण्डरीके विशेषतः ।
भित्तेरुत्सेधविस्तारमूर्ध्ववेद्यास्त्रिकोलकम् ॥ ४० ॥

शेष निम्नं च कर्तव्य निम्नमष्टाङ्गुलं भवेत् ।
मध्यवेदिसमुत्सेधं विस्तारो भाग उच्यते ॥ ४१ ॥

अधोवेद्याः समुत्सेधश्चतुरङ्गुलमेव वै ।
षडङ्गुलं तु विस्तारो दलैः षोडशभिर्युतः ॥ ४२ ॥

शल्यलोष्टतुषाङ्गारतृणभस्मादिहीनया ।
मृदा वा वालुकाभिर्वा कुण्डान्येतानि कल्पयेत् ॥ ४३ ॥

ऐशान्यां यागशालायामौपासनविधानतः ।
श्वभ्रं च स्नपनार्थ तु कर्तव्यं तद् द्विवेदिकम् ॥ ४४ ॥

अथवा बिम्बपीठं तु यावदायतविस्तृतम् ।
पीठस्य परितस्तस्य चतुर्दिक्षु तथैव च ॥ ४५ ॥

श्वभ्र भागाधिक कुर्यादुत्तरे जलमार्गकम् ।
दक्षिणोत्तरयोर्देव्योः श्वभ्र कुर्यात्तथैव च ॥ ४६ ॥

एतेषामेव वह्नीनां वक्ष्यते नामनिर्णयः ।
अग्निहोत्रादिकं हव्यं सर्वमाहुतिसंज्ञकम् ॥ ४७ ॥

आदाय तेन हव्येन होतव्योऽयं द्विजातिभिः ।
तस्मादाहवनीयाख्यां गतो वह्निर्महाद्युतिः ॥ ४८ ॥

हो इत्येव विषादोऽपि विषादो दुःखमुच्यते ।
दुःखं तापत्रय प्रोक्तं तापो हि नरकः स्मृतः ॥ ४९ ॥

तस्मात्तु नरकान्नित्यं यस्मिन्नग्नौ हुतं सदा ।
त्रायते यजमानं तदग्निहोत्रमिति स्मृतम् ॥ ५० ॥

अग्नेश्चाहवनीयस्य यस्मादाह्रियते तथा ।
ततोऽन्वाहार्य इत्युक्तो दक्षिणाग्निः पुरातनैः ॥ ५१ ॥

दक्षिणे कल्प्यमानत्वात् दक्षिणाग्निश्च स स्मृतः ।
धार्यो गृहपतेर्यस्माद्गार्हपत्य इति स्मृतः ॥ ५२ ॥

वसत्यावसथे यस्मादावसथ्यस्ततो भवेत् ।
ऋषिष्वग्निषु वेदेषु देवेष्वपि पितृष्वपि ॥ ५३ ॥

सभ्यंगतेषु मुख्योऽभूत्तस्मात्सभ्य उदाहृतः ।
त्रीनग्नीन् वाथ पञ्चाग्नीनाहिताग्निर्जुहोत्यमून् ॥ ५४ ॥

आवसथ्याख्यया केचिदाहुरौपासन च वै ।
विवाहादि गृहस्थेन निधायाजस्रमेव च ॥ ५५ ॥

होमैरुपासनादग्निरौपासन इतीरितः ।
भेदो ह्याहवनीयस्य चाग्निरौपासनो यतः ॥ ५६ ॥

कुण्डमौपासनस्यापि ज्ञेयमाहवनीयवत् ।
साकल्यमग्निहोत्रस्य तपसां चापि चालनम् ॥ ५७ ॥

विचिन्त्य श्रमणे चाग्नि ब्रह्मा यमसृजत्पुरा ।
तस्माच्छ्रामणकं प्राहुरग्निमेतं पुरातनाः ॥ ५८ ॥

सभ्याग्नैरेव भिन्नोऽभूदग्निः श्रामणको यतः ।
तस्माद्द्वयोरग्निकुण्डं तुल्यमेवेति संस्मृतम् ॥ ५९ ॥

एष श्रामणकाग्निस्तु वनस्थस्य विधीयते ।
गृहस्थोऽग्निं यथा नित्यं जुहोत्यौपासनं बुधः ॥ ६० ॥

श्रामणकं वनस्थोऽपि तथा नित्यं जुहोति च ।
हृत्पुण्डरीकादन्योऽग्निः संजातो ब्रह्मणस्तु यः ॥ ६१ ॥

हृत्पुण्डरीकजातत्वात्पौण्डरीकं हि तद्विदुः ।
तस्याकारश्च कुण्डस्य पुण्डरीकवदुच्यते ॥ ६२ ॥

तपोलोकश्च सत्यं च विष्णोर्लोको जनस्तथा ।
पौण्डरीकाधिदेवस्तु नारायण इति स्मृतः ॥ ६३ ॥

सर्वनिष्कृतिहोमार्थ क्रतूनामुत्तरः क्रतुः ।
तदग्नौ सर्वकाम्यं च यजेदित्याह पूर्वजः ॥ ६४ ॥

यथैव वायोरेकस्य पञ्चधा भेद उच्यते ।
तथैव मूर्तेर्विष्णोश्च सर्वप्राणिहिताय वै ॥ ६५ ॥

नामरूपादिभेदेन पञ्चधा भेद उच्यते ।
एष पुरुषः पञ्चधा पञ्चात्मेत्याह ऋक्च्छ्रुतिः ॥ ६६ ॥

तथा तदर्थमग्नेश्च नाममन्त्रक्रियादिषु ।
पञ्चधा भेदमिच्छन्ति प्रतिष्ठायां हरेः प्रभो· ॥ ६७ ॥

पञ्चमूर्त्यधिदेवास्तान् पञ्चाग्नीन् परिकल्पयेत् ।
विष्णुमूर्तिस्तु सभ्याग्नेरधिदेवः प्रकीर्तितः ॥ ६८ ॥

तथैवाहवनीयाग्नेः पुरुषो देवता स्मृतः ।
सत्योऽन्वाहार्यदेवश्च गार्हपत्येऽच्युतस्तथा ॥ ६९ ॥

आवसथ्येऽनिरुद्धश्च पञ्चानां पञ्च देवताः ।
मध्ये विष्णुस्तु पुरुष· प्राच्यां सत्यस्तु दक्षिणे ॥ ७० ॥

प्रतीच्यामच्युतस्तद्वदनिरुद्धस्तथोत्तरे ।
तत्तद्दैवत्यवद्धोमं तत्तद्देशे प्रकल्पयेत् ॥ ७१ ॥

आद्येष्टकानां विन्यासो गर्भप्रक्षेपण तथा ।
मूर्धेष्टकाना न्यासश्च ध्रुवसस्थापनं तथा ॥ ७२ ॥

महाप्रतिष्ठा श्रेष्ठा च प्रतिष्ठा पञ्चधा स्मृता ।
पञ्चप्रतिष्ठास्वेतासु पञ्चाग्नीन् जुहुयात्तथा ॥ ७३ ॥

पञ्चधाऽग्नीन् व्यक्रामद्विराडित्याह वै श्रुतिः ।
देव्योश्च कौतुकस्यापि स्नपनस्योत्सवस्य च ॥ ७४ ॥

सह प्रतिष्ठा चेत्तत्र पृथग्घोमं न कारयेत् ।
परितो यागशालायां तस्य तस्य दिशि क्रमात् ॥ ७५ ॥

दिग्देवतानामष्टानामन्येषा च यथाविधि ।
औपासनाग्निकुण्ड च कारयेत पृथक् पृथक् ॥ ७६ ॥

अथवाप्यालये तेषां कुण्ड कुर्याद्विधानतः ।
दिग्देवानां च होमस्तु दिशाहोम इतीर्यते ॥ ७७ ॥

सर्वेषां परिवाराणां प्रत्येक होममुत्तमम् ।
दिग्देवतानामष्टाना होम वै मध्यम विदुः ॥ ७८ ॥

देवस्य पौण्डरीकाग्नि पञ्चाग्नीनपि कल्पयेत् ।
अधमक्रममेन वै वदन्ति मुनयोऽपरे ॥ ७९ ॥

विष्वक्सेनस्य वीशस्य होमं सर्वत्र कारयेत् ।
एतद्रहस्यमस्मभ्यमुदितं विखनसा पुरा ॥ ८० ॥

(Chapter 29)

****

# AGNYĀGHĀRA VIDHI

एव कृत्वाग्निकुण्डानि पश्चादग्नीश्च साधयेत् ।
अरणि चैव संन्यस्य पूजयित्वा विधानवित् ॥ १ ॥

पट्टिकामुत्तरा चैव हरिणीमिति चार्चयेत् ।
दण्डे विष्णु समभ्यर्च्य तत्रैवाग्नि च पूजयेत् ॥ २ ॥

आचार्यः प्राङ्मुखो भूत्वा योजयित्वा तु मन्त्रवित् ।
मौञ्जी च त्रिवृता रज्जुं मथनार्थ समाहरेत् ॥ ३ ॥

जातवेदेति च जपन्नरण्यां मथन चरेत् ।
यावदग्निः समुत्पद्येत्तावद्यत्नेन मन्त्रवित् ॥ ४ ॥

परितस्तु करीषाद्यैर्योजयित्वा ततः परम् ।
अग्निमादाय चोत्पन्नमय त इति चोच्चरन् ॥ ५ ॥

तुषेन्धनादि निक्षिप्य सम्यगग्नि सुरक्षयेत् ।
अनेनैवाग्निना सर्व होमकर्म समाचरेत् ॥ ६ ॥

आचार्यो यजमानश्च स्थापका ऋत्विजोऽपि च ।
प्रतिष्ठादिवसात्पूर्व पञ्चमेऽह्नि त्र्यहेऽथवा ॥ ७ ॥

पूर्वेद्युर्वाथ पूर्वाह्णे वरयेदुक्तलक्षणान् ।
मन्त्रसूत्रविद शिष्टान् पत्नीयुक्ताननिन्दितान् ॥ ८ ॥

वैखानसेन सूत्रेण निषेकादिक्रियान्वितान् ।
औपासन जप होमं वैश्वदेव च कुर्वतः ॥ ९ ॥

प्रपन्नान् भक्तिसयुक्तान् सर्वकर्मसु निश्चलान् ।
ईदृग्गणुसमायुक्ताश्चत्वारः स्थापकाः स्मृताः ॥ १० ॥

अलाभे च त्रयो वापि द्वौ वा ग्राह्यौ तु तद्गुणौ ।
बिम्बानां कौतुकादीनां सर्वेषां तु पृथक् पृथक् ॥ ११ ॥

यावन्तस्तत्र होमाः स्युस्तावन्तोऽध्वर्यवः स्मृताः ।
ऋत्विजौ ब्रह्मसोमौ द्वौ होता चैकस्तथैव च ॥ १२ ॥

अक्ष्युन्मेषणहोमार्थं वास्तुहोमार्थमेव च ।
स्नपनार्थं त्रयः प्रोक्ताः सर्वदेवार्चनाय वै ॥ १३ ॥

पञ्चाहीनान् सदस्यांश्च उपद्रष्टारमेव च
संन्यासिनो वनस्थान् वा न गृह्णीयात्पदार्थिनः ॥ १४ ॥

पदार्थिनो गृहस्थाश्च ग्राह्या वा ब्रह्मचारिणः ।
सुवृत्ताः परिपूर्णाङ्गा मन्त्रकल्पविचक्षणाः ॥ १५ ॥

न दुष्टाङ्गा न दीर्घाङ्गा न ह्रस्वाङ्गा न मत्सरा· ।
योग्यानेवात्र संयोज्य गुरुर्वै याजयेत्क्रमात् ॥ १६ ॥

आलयस्योत्तरे पार्श्वे वास्तुहोमः सुहूयताम् ।
वास्तुहोमश्च यत्रोक्तस्तत्र वै वास्तुपूरुषम् ॥ १७ ॥

कल्पयित्वा विधानेन दशतालेन मानतः ।
वास्तुहोमश्च यत्रोक्तस्तावत्तस्याङ्गमुच्यते ॥ १८ ॥

प्राक्शिरोऽधोमुखः शेते भूमिस्थः स तु सर्वदा ।
एव सकल्प्य मनसा वास्तुहोमं समाचरेत् ॥ १९ ॥

कुक्षिप्रदेशे कुर्याच्चेद्धनधान्यविवर्धनम् ।
ऊरुबाहुप्रदेशे तु सदावीर्यविवर्धनम् ॥ २० ॥

मुखप्रदेशे कुर्याच्चेत्पुत्रपौत्रविवर्धनम् ।
नाभेरधस्तात्सर्वत्र कुण्डमग्नेर्न कारयेत् ॥ २१ ॥

वास्तुहोम च जहुयात्सूत्रोक्तेन विधानतः ।
पर्यग्निपञ्चगव्याभ्यां शोधयेदालयं तथा ॥ २२ ॥

अधिवासगतं देवमादायाभ्यर्च्य वै ततः ।
आलयाभिमुखे देशे विष्टरे विन्यसेत्पुनः ॥ २३ ॥

स्नात्वा पदार्थिनः सर्वे श्वेतवस्त्रानुलेपनाः ।
परिधायाहतं वस्त्र सोत्तरीयाङ्गुलीयकाः ॥ २४ ॥

यजमानोऽथ तत्काले श्रद्धया देवसंनिधौ ।
मधुपर्कं च संदद्याद्दुर्वादिभ्यस्ततः परम् ॥ २५ ॥

पूजिताश्च तथा कुर्युः स्वं स्वं कर्म यथाविधि ।
आधारं सर्वकुण्डेषु कुर्वन्वैखानसेरितम् ॥ २६ ॥

मथिताग्निं समुज्ज्वाल्य शुष्कैरेवेन्धनैर्भृशम् ।
वर्धयित्वा शरावे तं पृथगेव प्रगृह्य च ॥ २७ ॥

अलाभे मथितस्याग्नेराचार्यागारतो हरेत् ।
यजमानगृहाद्वाथ श्रोत्रियागारतोऽथवा ॥ २८ ॥

अद्भिः करकमापूर्य दक्षिणेऽग्नेर्निधाय च ।
दर्भेष्वन्याश्च संभारान् संभृत्योत्तरपार्श्वतः ॥ २९ ॥

एतोन्विन्द्रादिमन्त्रैश्च प्रोक्षणोल्लेखनादिकम् ।
कुर्यात्कुण्डे निधायाग्निं प्रज्वाल्यैव च मन्त्रतः ॥ ३० ॥

पश्चिमाभिमुखासीनं ध्यात्वैवाग्निं प्रणम्य च ।
वैखानसेन सूत्रेण सर्वमाघारमाचरेत् ॥ ३१ ॥

विशेषं संप्रवक्ष्यामि पञ्चाग्नीनां पृथक् पृथक् ।
षट् त्रिंशदङ्गुलैः कूर्चौर्द्वितीयस्यां तथैव च ॥ ३२ ॥

वेद्यामग्नि परिस्तीर्य परिधींश्च निधाय च ।
ऊर्ध्वाग्रौ समिधौ न्यस्य चोर्ध्ववेद्यां यथाविधि ॥ ३३ ॥

पुष्पाद्यैर्विग्रहैरेवं तथार्घ्याचमनान्तकैः ।
इन्द्रानीनपि दिग्देवानभ्यर्च्याष्टौ च दक्षिणे ॥ ३४ ॥

पार्श्वे ब्रह्माणमभ्यर्च्य सोमं चोत्तरतोऽर्चयत् ।
प्रणिधी द्वे निधायैव चोत्तरप्रणिधौ जले ॥ ३५ ॥

अग्न्यादिसर्वदेवांश्च आवाह्यैव ततः परम् ।
गार्हपत्याग्निमित्युक्त्वा गार्हपत्ये विशेषतः ॥ ३६ ॥

यज्ञदैवतविश्वेति चो भूः पुरुषमित्यपि ।
तथैवाच्युतमित्युक्त्वा देवतावाहनं चरेत् ॥ ३७ ॥

अन्वाहार्याग्निमित्युक्त्वा चान्वाहार्ये तथैव च ।
यज्ञदैवतविश्वेति चो भुवः पुरुषं तथा ॥ ३८ ॥

सत्यमूर्तिमिति प्रोच्य देवतावाहनं स्मृतम् ।
आहवनीयाग्निमित्युक्ता यज्ञदैवतमित्यपि ॥ ३९ ॥

ओ सुवः पुरुषं चेति पुरुष चाधिदैवतम् ।
एवमाहवनीयाग्नावावाहनमथाचरेत् ॥ ४० ॥

आवसथ्याग्निमित्युक्त्वा यज्ञदैवतमित्यपि ।
ओ महः पुरुषं चेति देवमप्यनिरुद्धकम् ॥ ४१ ॥

इत्येवमावसथ्याग्नावावाहनमुदीरितम् ।
सभ्याग्नि यज्ञदेवेति चो जनः पुरुषं तथा ॥ ४२ ॥

विष्णुदेवं तथा सभ्ये ह्यावाहनमथाचरेत् ।
आवाहनक्रमेणाज्यनिर्वापं कारयेद्बुधः ॥ ४३ ॥

तत्क्रमेण स्रुवेणाज्यं गृहीत्वाज्याहुतीर्यजेत् ।
जुहुयात्पञ्चधा तेषु पञ्चाग्निषु विशेषतः ॥ ४४ ॥

चतुरङ्गुलिसंस्रावा अविच्छिन्ना घृताहुतीः ।
अङ्गुष्ठपर्वमात्र तु गृहीत्वान्नाहुतिः स्मृता ॥ ४५ ॥

आघारे पौण्डरीकाग्नेर्विशेषः सप्रवक्ष्यते ।
पौण्डरीकाग्निमित्युक्त्वा यज्ञदैवतमित्यपि ॥ ४६ ॥

ओ तपः पुरुषं चेति वासुदेवमतः परम् ।
ओ सत्यं पुरुषं चेति नारायणमिति ब्रुवन् ॥ ४७ ॥

एवमावाहनं कृत्वा निरूप्याज्यं जुहोति वै ।
औपासनाग्निमित्युक्त्वा यज्ञदैवतमित्यपि ॥ ४८ ॥

औपासनाग्निमित्येवमावाह्याज्यं निरूप्य च ।
अग्नि श्रामणकं चेति श्रामणाग्निमुदीर्य च ॥ ४९ ॥

तथाज्यं जुहुयादेवमित्याघारक्रम विदुः ।

(Chapter 30)

******

## VIII

*Tārā-bhakta-sudhārṇava* is a tāntrik text dealing with a varity of issues of Śāktāgama. The following excerpts from this book decribe the daily rituals of purification and worship (Chapter 5). The book, which is actually a compilation of relevant passages from several Tāntrik texts and Āgama manuals of Śaiva and Vaishṇava divisions, was prepared by Thakkura-Narasimha, who was a student of Gadādhara :

नानातन्त्राणि विज्ञाय गदाधरगुरोर्मुखात् ।
करोति नरसिंहोऽयं ताराभक्तिसुधार्णवम् ॥

The importance of the book consists in the large number of Tāntrik and Āgama texts (many of them now lost) on which it relies. The book was originally recovered and edited by Arthur Avalon. It has recently been reprinted by Bharatiya Vidya Prakashan, Delhi (1983) with an English introduction by Pañchānana Bhaṭṭāchārya.

### 1. अथ नित्यविधिः

कुलचूडामणौ—

साधकः प्रातरुत्थाय कुलवृक्षं प्रणम्य च ।
मूलादिब्रह्मरन्ध्रान्तं कुलं ध्यात्वा गुरुं स्मरेत् ॥

कुलवृक्षा रुद्रयामले—

श्लेष्मातकं करञ्जं च निम्बाश्वत्थकदम्बकम् ।
बिल्वं वटं शालतालं शाखोटं खर्जुरं तथा ॥

(कुलवृक्षाः समुद्दिष्टा ... ...... । इति ।
वस्तुतः कुलवृक्षो वराङ्गनेति रहस्यविदः ।)

वीरचूडामणौ—

साधकः प्रातरुत्थाय संस्मरेद् गुरुमादरात् ।
महाचीनगुरुं ध्यात्वाऽथवर्षिगुरुक्रमम् ॥

पञ्चोपचारैः सम्पूज्य वीरद्रव्यक्रमेण तु ।

नीलाम्बरं नीलविलेपयुक्तं शङ्खादिभूषिततनुं मुदितं द्विनेत्रम् ।
वामाङ्कपीठस्थितनीलशक्तिं वन्दामि वीरं करुणानिधानम् ॥

परां तु देवतां ध्यात्वा हृदये नीलसुन्दरीम् ।
खर्वा नीला विशालाक्षी पञ्चमुद्राविभूषिताम् ॥

कपालकर्त्तृकाहस्तां खड्गेन्दीवरधारिणीम् ।
व्यालमालाजटाजूटा पीनोन्नतपयोधराम् ॥

नवयौवनसम्पूर्णां मदघूर्णितलोचनाम् ।
एवं ध्यात्वा महादेवी सर्वज्ञः साधको भवेत् ॥

वीरहंसमहाविद्यासङ्कल्पं कारयेद् बुधः ।
हंसाख्या-साधनं वक्ष्ये मन्त्रिणां हितकाम्यया ॥

यस्य विज्ञानमात्रेण सर्वज्ञो भुवि जायते ।
हंसात्मिकां भगवती जीवो जपति सर्वदा ॥

अस्याः स्मरणमात्रेण जीवन्मुक्तो भवेन्नरः ।
ऋषिर्हंसः समाख्यातः परहंसश्च देवता ॥

अव्यक्तश्छन्दो गायत्री विनियोगो योगसिद्धिदः ।

सुरेन्द्रसंहितायाम्—

ऋषिर्हंसो व्यक्तपूर्वो गायत्रं छन्द उच्यते ।
देवतापरमादित्यो हंसो हं बीजमुच्यते ॥

अ शक्तिः कीलकः सोऽहं प्रणवस्तत्त्वमेव हि ।
उदात्तः स्वर इत्येवं मनोरस्य प्रकीर्त्तितः ॥

मोक्षार्थे विनियोगः स्यादेवं कुर्यात् सदा नरः ॥

वीरचूडामणौ—

सूर्यात्मने च हृद् देवि सोमात्मने शिरस्तथा ।
निरञ्जनं शिखा ज्योतिर्निराभासा तथापरे ॥

अव्यक्तं नेत्रयोर्न्यस्य अनन्तोऽस्त्रे फडंप्यजेत्( ?) ।
एवं न्यासविधिं कृत्वा गणेशादौ समर्पयेत् ॥

सुरेन्द्रसंहितायाम्—

हंसात्मिकां भगवतीं जीवो जपति सर्वदा ।
हकारेण बहिर्याति सकारेण विशेत् पुनः ॥

अस्याः सम्बोधमात्रेण जीवन्मुक्तो भवेन्नरः ।
प्राणायामप्रभावेण जीवन्मुक्तस्तु जायते ॥

एकविंशतिसाहस्रं षट्शताधिकमेव च ।
प्रजपेत् प्रत्यहं जीवो ब्रह्मानन्दमयी पराम् ॥

उत्पत्तिर्जप आरम्भो मृतिरस्य निवेदनम् ।
विना जपेन सततं जपो भवति सर्वदा ॥

एवं जपस्तु विज्ञातो गणेशादौ निवेदयेत् ।

वीरचूडामणौ—

षट् शतानि गणेशस्य षट्सहस्रं प्रजापतेः ।
षट्सहस्रं गदापाणौ षट् सहस्रं पिनाकिनः ॥

सहस्रमात्मने चैव सहस्रं परमात्मने ।
सहस्रं गुरवे चैव सङ्कल्पोऽय यथाविधि ॥

रक्तवर्ण गणेशञ्च मूलाधारे चतुर्दले ।
वादिवेदसमायुक्ते षट् शतं च समर्पयेत् ॥

स्वाधिष्ठानं विद्रुमाभं षट्कोणं वादिषट्ककम् ।
सावित्र्या च समायुक्ते ब्रह्मणे च समर्पयेत् ॥

विद्युत्पुञ्जप्रभाभं च दलं डादिदशाक्षरम् ।
लक्ष्मीनारायणौ वन्दे षट् सहस्रं निवेदयेत् ॥

महानीलप्रभाभे च कादिद्वादशपत्रके ।
उमामहेश्वरौ वन्दे षट् सहस्र समर्पयेत् ॥

विशुद्धे धूम्रपत्रे च कलापत्रे स्वरान् न्यसेत् ।
प्राणशक्त्यात्मकौ वन्दे सहस्रं च समर्पयेत् ॥

आज्ञायां विद्युदाभायां शुभौ हक्षौ नियोजयेत् ।
परमात्मनि पराशक्तौ सहस्रं च समर्पयेत् ॥

कर्पूरद्युतिसंराजत्—सहस्रदलपङ्कजे ।
नीलात्मकं गुरुं ध्यायेत् सहस्रं च समर्पयेत् ॥

समुद्रमेखले देवि पर्वतस्तनमण्डले ।
विष्णुपत्नि नमस्तेऽस्तु पादस्पर्श क्षमस्व मे ॥

चरणं धारयेद् देवि आत्मश्वासानुसारतः ।
देहशौचादिकं कुर्याद् भस्मस्नानं समाचरेत् ॥

वीरासनोपविष्टस्तु वीरभस्मानुलेपनम् ।
वीर ध्यात्वा महादेवि वीरमालां जपेद् बुधः ॥

अष्टोत्तरसहस्रं च वामहस्ते समर्पयेत् ।

(वीरभस्म श्मशानभस्म । वामहस्त इत्यभिधानान् मूलमन्त्रजपोऽयमिति प्रतिभाति । विशुद्धेश्वरे तु—

यथा शक्त्या जपं कृत्वा स्तुत्वा सन्तोषयेच्छिवाम् ।

इत्युक्तम् । एतत्पूर्वमन्यत्र गुरुमन्त्रजपोऽप्युक्तः । तदुक्तं तत्त्वचिन्तामणौ—

अथवा वाग्भवं मायां लक्ष्मीबीजं समुद्धरेत् ।
हसखफ्रे तथानन्दभैरवाख्यं सहखफ्रें ॥

गुरुनाम तथा शक्तिनाम श्रीपादुकां स्मरेत् ।
दशधा सप्तधा वापि त्रिधा वा प्रजपेत् सुधीः ॥

जपं समर्पयेत् पश्चात् श्रीगुरोर्दक्षिणे करे । इति ।)

वीरचूडामणौ—

वज्रपुष्पं वरारोहे कारयेद् दन्तधावनम् ।

(वज्रपुष्पमार्त्तवं जवाकुसुमं वा। इदं च दन्तधावनं देहशौचानन्तरमेव कार्यम्। अन्यत्र तथा दर्शनात्। न्यासं कुर्यान्महेशानि शक्ति साङ्गे स्पृशेद् बुधः।

हावभावादिकं कुर्यात् स्नानकर्म समाचरेत्॥

वीरभस्मानुलेपनादि वीरसाधकमात्रपरम्। इदञ्च प्रातःकृत्यमावश्यकम्।

तदुक्तं यामले—

प्रातः कृत्यमकृत्वा च यो देवी भक्तितोऽर्चयेत्।
पूजा च विफला तस्य शौचहीना यथा क्रिया॥

## 2. अथ स्नानम्

तच्च त्रिविधम्। औदकमान्त्रमानसभेदात्। तत्रादौ प्रधानत्वादौदकं निरूप्यते।

नारदपञ्चरात्रे—

शङ्कुनास्त्राभिजप्तेन शुचिः स्नायात् तु मृत्तिकाम्।
गृहीत्वाऽस्त्रेण संमन्त्र्य यथा जलनिकेतनम्॥

तत्रादौ जलकुलं तु क्षालयेदस्त्रवारिणा।
मृदं कृत्वा द्विधा तत्र एकभागोपगं ततः॥

निधाय गोमयं दर्भात् तिलांश्चैवाभिमन्त्रितान्।
लौकिकं गौणमाद्येन भागेनैकेन यत्नतः॥

मलस्नानं पुरा कृत्वा विधिस्नानं समाचरेत्।

कूलचूडामणौ—

अथ वक्ष्यामि ते वत्स स्नानं कुलसुखावहम् ।
कृष्णरक्तहरिल्लीला विविधा मम मूर्त्तयः ॥

तत्र यत्कुलगः शिष्यः स तद्रूपं परामृशेत् ।
आचान्तः कुलदर्भेण सदर्भः कुलपुष्पकम् ॥

कुलपात्रे सदर्भं च सतिलं सजल ततः ।
गृहीत्वा कुलदेवस्य प्रीतये स्नानमाचरेत् ॥

कृतसङ्कल्प एवासौ कुलचक्रं जले न्यसेत् ।
कुलसुरात् समानीय कुलमुद्रां कुशेन च ॥

कुलतीर्थानि तत्रैव समानीय कुलात्मकम् ।
तत् तोयं च त्रिधा पीत्वा त्रिधा च प्रोक्षणं तनोः ॥

यत्कुलग· समन्त्रदीक्षितः । कुलदर्भो यथा रुद्रयामले—

त्रयो दर्भा· समुद्दिष्टाः सुवर्णै रजतैः कुशैः
तत्र शाक्ते द्वयं चान्यदन्येषां तु त्रयो मताः ॥

सुवर्णं रजतं चैव जपपूजादिकर्मसु ।
कुशाकार्यकरं प्रोक्तं न तु वन्यकुशाः कुशाः ॥

अन्यत्रापि—

तर्जन्या रजतं धार्यं स्वर्णं धार्यमनामया ।
एष एव कुशः प्रोक्तो न दर्भो वनसम्भवः ॥

यामले—

विना वै दूर्वया देवी-पूजा नास्तीह कर्हिचित् ।
तस्माद् दूर्वा गृहीतव्या सर्वपुष्पमयी शुभा ।
हस्ते दूर्वाङ्कुरं दत्त्वा आचामेद् विधिपूर्वकम् ।

कुलपुष्पं जवापुष्पादिकम् । कुलपात्रं सुवर्णादिपात्रम् । कुलदेवस्य इष्टदेवतायाः । कुलचक्रं त्रिकोणचक्रम् । तल्लिखनप्रकारस्तु मालिनीतन्त्रे—

त्रिकोणं मूलमन्त्रेण सावित्रे हंसकं जपन् ।
दक्षावर्त्तक्रमेणैव लिखेद् देवि समाहितः ॥

मूलबीजेनेति । मन्त्रान्तरे । सावित्रे सूर्यमन्त्रे । हंसकं हंस इति मन्त्रम् । अङ्कुशमुद्रा च—

दक्षमुष्टिं विधायाऽथ तर्जन्यङ्कुशरूपिणी ।
अङ्कुशाख्या महामुद्रा त्रैलोक्याकर्षणक्षमा ॥

इति तन्त्रोक्ता । तीर्थावाहनमन्त्रश्च श्रीक्रमसंहितायाम्—

गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु ॥

त्रिधा तोयपानमाचमनरूपमेव । तच्च मूलमन्त्रेण । प्रोक्षणमपि तेनैव । तदुक्तं त्रिशक्तिरत्ने—

त्रिराचम्य च मूलेन मुद्रया कुम्भसंज्ञया ।
त्रिवारं मन्त्रपूतेन शिरः संप्रोक्षयेत् सुधीः ॥

मुद्रा चेयमुक्ता तन्त्रे—

दक्षाङ्गुष्ठे पराङ्गुष्ठं क्षिप्त्वा हस्तद्वयेन तु ।
सावकाशा चैकमुष्टिर्मुद्रेयं कुम्भसंज्ञिता ॥

गन्धर्वतन्त्रे—

मूलं पठन् मूर्ध्नि तोयं मुद्रया कुम्भसंज्ञया ।
क्षिप्त्वा वारत्रयं पश्चादाचामेत् साधकाग्रणीः ॥

आत्मविद्याशिवैस्तत्त्वैस्ततो यागगृहं व्रजेत् ।

आत्मविद्याशिवैस्तत्त्वैरिति । आत्मतत्त्वेन स्थूलदेहं शोधयामि स्वाहा । विद्यातत्त्वेन सूक्ष्मदेहं शोधयामि स्वाहा । शिवतत्त्वेन परदेहं शोधयामि स्वाहेति मन्त्रत्रयेण चुलुकत्रयं गृह्णीयादित्यर्थः ।

नीलतन्त्रे—

विद्यया त्रिर्निमज्यैवमाचामेत् पाथसा तथा ।

वशिष्ठसंहितायाम्—

कृत्वादौ वैदिकं स्नानं ततस्तान्त्रिकमाचरेत् ।
विन्यस्याङ्गे षडङ्गानि प्राणायामपुरःसरम् ॥

श्रीसूर्यमण्डलात् तीर्थमाकृष्याङ्कुशमुद्रया ।
वमित्यनेन चाप्लाव्य कवचेनाऽवगुण्ठयेत् ।

संरक्ष्यास्त्रेण मूलेन मन्त्रयेद् रुद्रसंख्यया ।
आत्मरक्षां ततः कुर्याद् वारिक्षेपेण चास्त्रतः ॥

निमज्य तत्र श्रीदेवं ध्यायेच्छक्त्या मनुं जपेत् ।
उन्मय्य कुम्भमुद्रां च बद्ध्वा सिञ्चेत् स्वमूर्धनि ॥

त्रिपुरार्णवे—

विधाय वैदिकं स्नानं ततस्तान्त्रिकमाचरेत् ।
मृदमस्त्रेण चादाय तेन तामभिषिच्य च ॥

शिखामन्त्रेण संशोध्य मन्त्रयेन्मूलमन्त्रतः ।
मूर्धादिपादपर्यन्तं विलिप्य च तया वपुः ॥

सम्मुखीकरणी मुद्रां बद्ध्वा प्राणं निरुध्य च ।
निमज्य तूष्णीमुत्थाय नाभिमात्रे जले स्थितः ॥

प्राणायामत्रयं कृत्वा मूलमन्त्रेण मन्त्रवित् ।
विन्यस्य च षडङ्गानि कल्पयेत् तीर्थमग्रतः ॥

ततः संप्रार्थयेत् तीर्थं सूर्यमण्डलगं ततः ।
घृणिमन्त्रेण मन्त्रज्ञो भित्त्वा चाङ्कुशमुद्रया ॥

तीर्थावाहनमन्त्रेण तीर्थमावाहयेत् प्रिये ।
मूलमन्त्रेण संयोज्य कल्पिते तीर्थमण्डले ॥

तीर्थशक्तिं च तत्रैव समावाह्याऽर्कमण्डलात् ।
ध्यात्वा तन्मनुनाऽभ्यर्च्य गङ्गामन्त्रेण मन्त्रयेत् ॥

सप्तकृत्वः शिवे चास्मिन् शृणु मन्त्रद्वयं प्रिये ।
जलस्थं व्योमषड् दीर्घ-स्वरभिन्नं सबिन्दुकम् ॥

सर्वानन्दमये तीर्थे शक्ते एह्येहियुगं द्विठः ।
एकविंशाक्षरः प्रोक्तस्तीर्थशक्तिमनुः प्रिये ॥

तारं नमो भगवति ब्रूयादम्बे ततोऽम्बिके ।
अम्बालिके महामालिन्येह्येहि भगवत्यथ ॥

अशेषतीर्थालबाले मायाश्रीबीजमुच्चरेत् ।
शिवजटाधिरूढे च गङ्गे गङ्गाम्बिके द्विठः ॥

गङ्गाविद्येयमाख्याता त्रिपञ्चाशद्भिरक्षरैः ।
भुवनेश्या समालोड्याऽमृतीकृत्य सुधाणुना ॥

कवचेनाऽवगुण्ठ्याऽथ संरक्ष्याऽस्त्रेण मन्त्रवित् ।
मूलेन देवता तत्र साङ्गां सावरणां तथा ॥

समावाह्य जले ध्यात्वा तत्पादद्वयनिर्गतम् ।
ध्यात्वा तीर्थं स्मरन् मूलमन्त्रं स्नायाज्जले त्रिशः ॥

उन्मज्य मूलमन्त्रेण सिञ्चेत् किं कुम्भमुद्रया ।
आचम्य विधिना पश्चान् मूलमन्त्रेण तर्पयेत् ॥

त्रिधा देवीं समुत्तीर्य जलाद्धौते शुभाम्बरे ।
परिधायाऽथ तिलकं कृत्वा सन्ध्यां समाचरेत् ॥

संप्रार्थयेदिति—

ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे ।
तेन सत्येन मे देवेश तीर्थं देहि दिवाकर ॥

इत्यनेनेत्यर्थः । तीर्थावाहनमन्त्रेणेति । गङ्गे चेत्यनेनेत्यर्थः । ध्यात्वेति—

सर्वानन्दमयीमशेषदूरितध्वंसां मृगाङ्कप्रभां
त्र्यक्षामूर्ध्वकरद्वयेन दधती पाशं शृणिं वामतः ।

अन्तश्चामृतपूर्णहिमकलशौ मुक्ताक्षमाला वरां
गङ्गां सिन्धुसरिद्वरादिसहितां श्रीतीर्थशक्तिं भजे ॥

इति प्रकारेण। एतेषां प्रकाराणामविरोधे समुच्चयः। विरोधे विकल्पः। त्रिपुरार्णवोक्तप्रकारस्तु त्रैपुर एवेत्यपि वदन्ति।

### 3. अथ मान्त्रस्नानम्

नारदपञ्चरात्रे— "अथ मान्त्रं शुभं शृणु" इत्युपक्रम्य—

तोयाभावे तु यत् कार्य दुर्गे काले वशी ततः।
गमने क्षिप्रसिद्ध्यर्थं गुरुकार्येष्वतन्द्रितः॥

प्राप्तापद्यथ विप्रेन्द्र निशायागे तथा मुने।
प्रक्षाल्य पादावाचम्य प्रोद्धृतेन तु वारिणा॥

स्थानं दश दिशः प्राग्वत् संशोध्योपोविशेत् ततः।
अस्त्रं हस्ततले न्यस्य क्रमान् न्यासान् ततश्चरेत्॥

मूलमन्त्रादितः कुर्यात् सर्वमन्त्रगणेन वै।
केवलादुदकस्नानात् सस्कारपरिवर्जितात्।
प्रभासादिषु तीर्थेषु यत् फलं स्नातकस्य तु।
ज्ञेयं दशगुणं तस्मान्मन्त्रस्नानस्य निश्चयात्॥

तोयाभावे औदकस्नानक्षमतोयाभावे। अस्त्रमित्यादि। स्वविद्याया अस्त्रमन्त्र करयोर्विन्यस्य मन्त्रन्यासपूर्वकं स्वतन्त्रोक्तन्यासजालं कुर्यादित्यर्थः। केवलादिति। स्नानमिह न्यासरूपमेव। तन्त्रान्तरे तु—

मणिबन्धादधो हस्तौ पादौ गुल्फादथाननम्।
क्षालयेत् स्नानमेतत् स्यात् पञ्चाङ्गं शुद्धिदायकम्॥

## 4. अथ मानसस्नानम्

शैवागमे—

मनसा मूलमन्त्रेण प्राणायामपुरःसरम् ।
कुर्वीत मानसं स्नानं सर्वत्र विहितं च यत् ॥

सर्वत्र सर्वविद्यासु ।

नारदपञ्चरात्रे—

ध्यानस्नानमथो वक्ष्ये द्वाभ्यामपि परं च यत् ।
खस्थितं पुण्डरीकाक्षं मन्त्रमूर्तिं प्रभुं स्मरेत् ॥

तत्पादोदकजां धारां निपतन्ती स्वमूर्धनि ।
चिन्तयेत् सूक्ष्मरन्ध्रेण प्रविशन्ती स्वकां तनुम् ॥

तया संक्षालयेत् सर्वमेतद्देहगतं मलम् ।
तत् क्षणाद् विरजा मन्त्री जायते स्फटिकोपमः ॥

इदं स्नानवरं मन्त्रस्नानाच्छतगुणं स्मृतम् ।

पुण्डरीकाक्षमित्युपलक्षणम् । या यस्य देवता स तं स्मरेदिति तात्पर्यम् । द्वाभ्यामिति । अल्पायासेन तत्फलकत्वाद् द्वाभ्यां श्रेष्ठमित्युक्तम् । न त्वतस्तत् प्रधानमिति बोध्यम् । अस्यास्तु विद्याया महीचीनक्रमोपास्यत्वादत्र मानसस्नानमेव प्रधानम् । तत उत्थाय वाससी बिभृयात् । तदुक्तं कुलचूडामणौ—

उत्थाय कुलवस्त्रे द्वे परिधाय कुलेन तु ।
तिलकं कुलरूपं तु कृत्वाऽवश्यं समाप्य च ॥

कुलवस्त्र इत्यत्र कुलपदमुत्कृष्टरक्तवाचि। कुलेन मूलमन्त्रेण। कुलरूपं तिलकम्। 'श्मशानमृद्भिः सततं त्रिपुण्ड्रं कारयेत् सुधी'रिति मत्स्यसूक्तोक्तं वीरतिलकम्।

नारदपञ्चरात्रे—

सुधौतं परिधायाऽथ वस्त्रयुग्ममखेदकम्।
तदभावादथ शाटी योगपट्टकसंयुताम्॥

न चैकवाससा यस्माद् भवितव्यं कदाचन।

स्वतन्त्रतन्त्रे—

मोक्षार्थी रक्तवस्त्रे द्वे भोगार्थी श्वेतवाससी।
परिधाय ततो विद्वान् यागभूमिं यथा विशेत्॥

यामले—

बिभृयाद् वाससी शुभ्रे तिलकं वर्णभेदतः।

वर्णभेदत इति—

ब्राह्मणस्योर्ध्वपुण्ड्रं स्यात् क्षत्रियस्य त्रिपुण्ड्रकम्।
वैश्यानामर्धचन्द्रं स्याच्छूद्रस्य वर्तुलाकृतीति॥

नारदपञ्चरात्रोक्तक्रमेणेत्यर्थः।

समयातन्त्रे—

भस्मना तिलकं कुर्याद् मृद्भिर्वा पुण्ड्रकत्रयम्।

भैरवीतन्त्रे—

तिलकं रक्तगन्धेन गोपीचन्दनकेन वा।
देव्यस्त्रं विलिखेद् भाले तारबीजं ततो हृदि॥

शक्ति मध्यगता कुर्यात् साधको नरपुङ्गवः ।

भैरवीतन्त्रे—

आचम्य प्राङ्मुखो भूत्वा उपविश्य च मन्त्रवित् ।
वैदिकी तान्त्रिकी कुर्यात् ततः सन्ध्यां समाहितः ॥

शैवागमे—

प्राणायामत्रयं कृत्वा मूलमन्त्रेण मन्त्रवित् ।
अङ्गानि विन्यसेद् देहे करन्यासपुरःसरम् ॥

अमृतीकृत्य पुरतो जलं च धेनुमुद्रया ।
अभिमन्त्र्य च मूलेन सप्तवार च साधकः ॥

अकारादिक्षकारान्तैर्मातृकार्णैः सबिन्दुभिः ।
प्रत्यण प्रोक्षयेन्मूर्ध्नि कुशैर्मूलेन वा त्रिधा ॥

कुमारीकल्पे—

प्रणवं पूर्वमुद्धृत्य मणिधरणि वज्रिणि ।
रक्षद्वय तथा हूं फट् स्वाहेति तदनन्तरम् ॥

अनेनैव हि मन्त्रेण रक्षां कुर्याद् विचक्षणः ।
पुनराचम्य विन्यस्य षडङ्गमपि मन्त्रवित् ॥

वामहस्ते जलं गृह्य गलितोदकबिन्दुभि· ।
सप्तधा प्रोक्षणं कृत्वा मूर्ध्नि मन्त्रं समुद्गिरन् ॥

अवशिष्टोदकं दक्षे हस्ते संगृह्य मन्त्रवित् ।
इडया कृष्णदेहान्तः क्षालितं पापसञ्चयम् ॥

कृष्णवर्ण तदुदक दक्षनासाभिरेचितम् ।
दक्षहस्तेन तन्मन्त्री पापरूप विचिन्त्य च ॥

पुरतो वज्रपाषाणे प्रक्षिपेदस्त्रमन्त्रतः ।

रक्षा शिखाबन्धनरूपैवेति तत्त्वविदः ।

यामले—

षडङ्गन्यासमाचर्य वामहस्ते जलं ततः ।
गृहीत्वा दक्षिणेनैव सपुटं कारयेत् ततः ॥

शिववायुजलपृथ्वी-वह्निबीजैस्त्रिधा पुनः ।
अभिमन्त्र्य च मूलेन सप्तधा तत्त्वमुद्रया ॥

निक्षिपेत् तज्जलं मूर्ध्नि शेषं दक्षे निधाय च ।
शरीरान्तस्थित पापं क्षालयेत् साधकाग्रणीः ॥

मूलेन तिलक कुर्यात् सन्ध्यैवैव हि कौलिकी ।
उद्दिश्य कुलगं शिष्यं कथिता कुलसुन्दरि ॥

शिवबीज हकारः । वायुबीज यकारः । जलबीजं वकारः । पृथ्वीबीजं लकार· । वह्निबीजं रेफः । एतेषां च सानुस्वाराणा बीजत्वम् । सजलं वामहस्तं दक्षहस्तेन सपुटीकृत्य एभिर्बीजैस्त्रिधा जलमभिमन्त्रयेत् । तत्त्वमुद्रा अनामाङ्गुष्ठयोगेन भवति । तथा च हस्तस्थमेव जल मूलमन्त्रेण सप्तधा मूर्ध्नि क्षिपेदित्यर्थः । तदत्र कुमारीकल्पयामलयोर्विकल्पो-गुरुक्रमपरिच्छेद्यः ।

वीरचूडामणौ—

वियद्वह्नि समुच्चार्य नारायणं सबिन्दुकम् ।
मायाबीजं समुच्चार्य गगनं वह्निसंयुतम् ॥

अर्धचन्द्रसमायुक्तं वामकर्णविभूषितम् ।
हंस इत्युच्चरेत् पश्चात् सूर्यमण्डलङेन्तकम् ।
तारायै पदमुच्चार्य हृदयान्तेऽञ्जलिं क्षिपेत् ॥

ततो गायत्रीं जपेत् ।

तदुक्तं शैवागमे—

गायत्र्या वाथ मूलेन दद्यादर्घ्यत्रयं ततः ।
शिवाय मण्डलस्थाय मुखे मूलेन तर्पयेत् ॥

त्रिधा जप्त्वाथ गायत्री अष्टाविंशतिवारकम् ।

गायत्रीं स्वेष्टदेवतागायत्रीम् । तारागायत्री चोक्ता कालिकार्णवे—

ऐं भगवत्येकजटे विद्महे च पदं ततः ।
विकटदंष्ट्रे धीमहि तन्नस्तारे प्रचोदयात् ॥

मालिनीतन्त्रे—

महोग्रायै च विद्महे तारायै धीमहि प्रिये ।
तन्नो देवी च शब्दान्ते धियो यो नः प्रयोदयात् ॥

वीरचूडामणौ—

अष्टधा दशधा वापि गायत्री च जपेद् बुधः ।
वाग्भव च समुच्चार्य एकजटायै विद्महे ॥

देवि स्त्रीं च समुच्चार्य नीलसरस्वत्यै धीमहि ।
हृल्लेखां च समुच्चार्य ततस्तारे प्रचोदयात् ॥

जप्त्वा समर्पणं कुर्याद् देवतावामहस्तके ।

गायत्रीध्यानं तु तन्त्रे—

उद्यदादित्यसङ्काशा पुस्तकाढयकरां स्मरेत् ।
कृष्णाजिनधरां ब्रह्मी ध्यायेत्तारकिताम्बरे ॥

मध्याहे—

श्यामवर्णा चतुर्बाहुं शङ्खचक्रलसत्कराम् ।
गदापद्मधरां देवी सूर्यबिम्बकृताश्रयाम् ॥

सायाह्ले वरदां देवी गायत्री संस्मरेद् बुधः ।
शुक्लां शुक्लाम्बरधरां वृषासनकृताश्रयाम् ।
त्रिनेत्रां वरदां पाश शूलं च नृकरोटिकाम् ॥

गौतमीये—

संक्षेपसन्ध्यामथवा कुर्यान्मन्त्री ह्यशक्तितः ।
सायं प्रातश्च मध्याह्ले कृष्णं ध्यात्वा मनुं जपेत् ॥

इति सन्ध्यात्रयं प्रोक्तं कर्मिणां सिद्धिदायकम् ।

कृष्णमित्युपलक्षणम् । स्वेष्टदेवतामित्यर्थः ।

शैवागमे—

सन्ध्यालोपो न कर्तव्यः शम्भोराज्ञैवमेव हि ।
दीक्षितः सन्ध्यया हीनो न दीक्षाफलमश्नुते ॥

सन्ध्याहीनोऽन्यसन्ध्यायां पूर्वसन्ध्याक्रियामथ ।
विधायोत्तरसन्ध्यायाः क्रियां कुर्यादतन्द्रितः ॥

गौतमीये—

सन्ध्यायां पतिताया वा गायत्री दशधा जपेत् ।

तन्त्रराजे तु—

स्नानसन्ध्यार्चनालोपे जपेदष्टोत्तरं शतम् । इत्युक्तम् ।

## 5. अथ तर्पणम्

कूलचूडामणौ—

देवान् ऋषीन् पितृंश्चैव तोषयेत् कुलवारिणा ।
कुलात्मकान् पुनर्ध्यात्वा कुले संलीय तोषयेत् ॥

कुलवारिणा आहूतकुलवीर्यमयवारिणा । कुलात्मकान् दिव्योघसिद्धौघ-मानवौघान् । कुले पूजाचक्रे । संलीय आवाह्य । तथा—

भैरवाय च देवाय भैरवावेशकारिणे ।
भैरवाख्यं प्रदातव्यं मन्त्रमुच्चार्य पूर्वतः ॥

भैरवाख्यं मन्त्रमित्यन्वयः । स चानन्दभैरवमन्त्रो वक्ष्यते । पूर्वत ओघत्रयतर्पणात् पूर्वम् । यामले—

तर्पणादौ प्रयुञ्जीत तृप्यतां ब्रह्मभैरवः ।

तर्पणे पितृणा भैरवत्वेनोल्लेखस्तु वीरविषयः । पशुना तु मालिनीतन्त्रे—

दक्षिणाशामुखो भूत्वा संगृह्य मोटकं ततः ।
तृप्यन्तु पितरः प्रोक्त्वा चैतत् तर्पणमाचरेत् ॥

शैवागमे—

ध्यात्वा देवं जले सम्यक् पूजयित्वाऽथ मूलतः ।
अष्टोत्तरशतावृत्त्या तर्पयेन्मूलमन्त्रत· ॥

तदर्धेन तदर्धेन दशधा वाथ तर्पयेत् ।
ततस्तदङ्गावरणदेवतास्तर्पयेत् क्रमात् ॥

एकैकाञ्जलिना तद्वन्मूलमन्त्रपुरःसरम् ।
तत· सम्पूज्य देवेशं साङ्गावरणकं ततः ॥

संबद्धास्ये हृदि स्वीये आत्मानं तन्मयं स्मरेत् ।

यामले—

यन्त्रराज जले ध्यात्वा तत्र देवीं निधाय च ।
देवर्षिपितृपूर्वां तु सायुधां सपरिवाराम् ॥

जलं वा तर्पयेद् देवीं गृहे वा तर्पयेत् सुधीः ।
गुरुपङ्क्तिं च सन्तर्प्य वटुकादींश्च तर्पयेत् ॥

मूलदेवीं च सन्तर्प्य तर्पयेत् परिवारकान् ।
तर्पयेद् द्वारपालादींस्तथैवाङ्गादिदेवताः ॥

शेषिकां सुन्दरीं पश्चादैश्यां च परमं गुरुम् ।
अग्नौ परापरं चैव नैरृत्यां परमेष्ठिनम् ॥

व्यायव्यादीशपर्यन्तं गुरुपङ्क्तिं च तर्पयेत् ।
अङ्गानि तत्तत्स्थानेषु मध्ये देवीं च तर्पयेत् ॥

तारायां तु विशेषो मालिनीतन्त्रे—

तीर्थोदकं तिलं कल्कं क्षीराक्षतसमन्वितम् ।
उत्तराशामुखो भूत्वा देवीमात्रं प्रतर्पयेत् ॥

मात्रपदात् परिवारतर्पणं केवलं जलेनैव । इष्टदेवतातर्पणप्रकारो नीलतन्त्रे—

मूलान्ते तर्पयामीति स्वाहान्तं तर्पणं मतम् ।
एवं त्रिधा तर्पणं तु कृत्वा पापक्षयो भवेत् ॥

तर्पयामीत्यतः पूर्व द्वितीयान्तदेवतानाम योज्यम् क्रियायाः कर्मसापेक्षत्वात् । तथैव सर्वत्र दर्शनाच्च ।

मूलान्ते तारिणी प्रोच्य तर्पयाम्यग्निवल्लभा ।

इति मालिनीतन्त्रवचनाच्च । तर्पणमिष्टदेवतायाः तत्रैव मूलमन्त्रान्वयस्य युक्तत्वात् । इदं वैष्णवान्यपरम् । वैष्णवे तु गौतमीये—

आदौ मन्त्रं समुच्चार्य श्रीपूर्वं कृष्णमित्यपि ।
तर्पयामि पदं चोक्त्वा नमोऽन्तं तर्पयेन्नरः ॥

अन्यत्र तु—

तर्पयामि पदं योज्यं मन्त्रान्ते स्वेषु नामसु ।
द्वितीयान्तेषु चेत्येवं तर्पणस्य मनुर्मतः ॥

एवं च मुख्यतर्पणमष्टोत्तरशतावृत्त्येति प्रथमः पक्षः । पापक्षयो भवेदित्यतो नित्यकाम्यमेतदवसीयते । प्रत्येकमङ्गपरिवारतर्पणशक्तौ साङ्गां सपरिवारां सवाहनां सायुधां अमुकदेवतां तर्पयामि स्वाहेत्येवं यथाशक्ति देवतामेव तर्पयेदित्यागमिकाः । ततः सूर्यायार्घ्यं दद्यात् । तदुक्तं यामले—

मार्त्तण्डभैरवायेति त्रिधा चार्घ्यं प्रकल्पयेत् ।

मार्त्तण्डभैरवायेत्येकदेशग्रहणम् । तन्मन्त्रस्तु ह्रीं हसः मार्त्तण्डभैरवाय प्रकाशशक्तिसहिताय इदमर्घ्यं स्वाहेति ।

तन्त्रराजोत्तरे—

संस्मृत्य भैरवं देवं मार्तण्डाख्यमुमापतिम् ।
मूलेन मनुना देवि सूर्यस्य मनुनाऽथवा ॥

मायाबीजं समुद्धृत्य सोऽहं तु विपरीतकम् ।
मार्त्तण्डभैरवं ङेन्तं प्रकाशशक्तिसयुतम् ॥

सूर्यस्य मन्त्रः संप्रोक्त ------ इति ।

नन्दिकेश्वरसंहितायाम्—

दिनेशाय क्षिपेत् तिष्ठन् वारिणा चाञ्जलित्रयम् ।
यावन्न दीयते चार्घ्यं भास्कराय निवेदनम् ।
तावन्न पूजयेद् विष्णुं शङ्करं वा सुरेश्वरीम् ॥

ततः सूर्यमण्डलस्थायै देव्यै अर्घ्यं दद्यात् ।

तदुक्तं नीलतन्त्रे—

कुशीतमोड्रपुष्पं च कुलपुष्पं कुशाजलम् ।
अक्षतांश्च तथा ताम्रे कृत्वा चार्घ्यं निवेदयेत् ॥

मूलान्ते चोद्यदादित्यपदान्मण्डलवर्तिन्यै ।
शिवचैतन्यमय्यै च स्वाहेति तन्मनुः स्मृतः ॥

कुशीतं रक्तचन्दनम् । कुलपुष्पमार्तवम् । अत्र कालीतत्त्वकृतः— 'उक्तेनैव विधानेन स्नानं कृत्वा तु तान्त्रिकमि'ति वचनात् 'सन्ध्यैषैव हि कौलिकी । उद्दिश्य कुलग शिष्यं कथिते'ति ब्रह्मयामलवचनात्—

> कौलिक कुर्वतः कर्म वैदिक नाभिधीयते ।
> वैदिकं कुर्वतः कर्म कौलिकं नाभिधीयते ॥

इति रुद्रयामलवचनात् 'अथ योनिरुपेक्षमेव (?) कर्मे'त्यथर्ववेदाच्च कौलिकैर्वैदिकस्नानसन्ध्यातर्पणादीनि न कार्याणीति वदन्ति । तन्न । 'कृत्वादौ वैदिकं स्नानं ततस्तान्त्रिकमाचरेत्' इति वशिष्ठसंहितावचनस्य— 'विधाय वैदिकं स्नानं ततस्तान्त्रिकमाचरेत्' इति त्रिपुरार्णववचनस्य च— 'वैदिकीं तान्त्रिकी सन्ध्यां कृत्वा तर्पणमाचरेत्' इति तन्त्रान्तरवचनस्य च विरोधात् तद्वचनानामन्यथार्थः कल्प्यते । तथाहि— उक्तेनैवेति । एवकारो भिन्नक्रमः कृत्वैवेत्यत्रान्वेति । सन्ध्यैषैवेत्येवकारस्तान्त्रिक कल्पान्तरं नास्तीत्येतदर्थकः ।

'कौलिकं कुर्वत' इति रुद्रयामलवचनम् अथर्ववचनं च सर्वशाखाप्रत्ययमेकं कर्मेति न्यायप्राप्तयुगपदुभयेतिकर्तव्यताचरणप्रतिषेधकमिति न किञ्चिदेतत् ।

## 6. अथ पूजा

सा च त्रिविधा उत्तममध्यमकनिष्ठभेदात् । तथा चोक्तं फेत्कारिणीतन्त्रे—

> शक्तिभिर्मूर्तिभिश्चैव लोकपालैश्च संयुताः ।
> पीठयन्त्रक्रमाद् यागो नित्ययागः स उत्तमः ॥

> पीठेनैव समस्तेन बहिरावरणं विना ।
> अग्निकार्येण हविषा भूषणैश्च समन्वितः ॥

